श्रीश्रीगुरुगौराङ्गौ जयतः

गौडीय वैष्णवाचार्यवर्य श्रीरूप गोस्वामी पाद विरचितम्

# श्रीप्रयुक्ताख्यात मञ्जरी

मूलसंस्कृतमात्रम्


गौडीयसम्प्रदायाचार्य
श्रीहरिदास शास्त्रीणा सम्पादितः


आधुनिक प्रतिलिपि संस्करण


पण्डित श्रीरघुनाथ दास शास्त्रीजी महाराज
व्याकरण,वेदान्तदर्शन,(श्रीधामवृन्दावन)



www.bhaktidarshan.org

Whatsapp +918218476676

❀ श्रीश्रीगौरगदाधरौ विजयेताम् ❀

# प्रयुक्ताख्यात-मञ्जरी

## श्रीश्रीरूपगोस्वामिप्रभुपाद-प्रणीता

श्रीधाम-वृन्दावन-वास्तव्येन न्यायवैशेषिकशास्त्रि-नव्यन्यायाचार्य काव्य व्याकरण सांख्य मीमांसा वेदान्त तर्क तर्क तर्क वैष्णवदर्शन तीर्थाद्युपाधिसमलङ्कृतेन **श्रीहरिदासशास्त्रिणा** प्रकाशिता ।

सद्ग्रन्थ प्रकाशक :

**श्रीहरिदास शास्त्री**

**श्रीगदाधरगौरहरि प्रेस**

श्रीहरिदास निवास ■ कालीदह, वृन्दावन (मथुरा) २८११२१

मुद्रक – प्रकाशक :—

**श्रीहरिदास शास्त्री**

**श्रीगदाधरगौरहरि प्रेस,**

श्रीहरिदास निवास, कालीदह

वृन्दावन, मथुरा (उ० प्र०) पिन— २८११२१

प्रथम संस्करणम्— १०००

प्रकाशन तिथि—

**मकर संक्रान्ति १९९०**

प्रकाशन सहायता—मुद्रा द्वयम् ।

* श्रीश्रीगौरगदाधरौ विजयेताम् *

# विज्ञप्ति

श्रील रूपगोस्वामिपाद प्रणीत 'प्रयुक्ताख्यातमञ्जरी' नामक क्रियाकोष प्रकाशित हुआ। यह ग्रन्थ भट्टमल्ल रचित 'आख्यात-चन्द्रिका' का संक्षिप्त संस्करण है। ग्रन्थ के नाम से ही बोध होता है कि—इसमें साहित्यमें प्रयुक्त आख्यात समूह का ही उल्लेख हुआ है।

प्रस्तुत ग्रन्थ तीन काण्ड में (अध्याय में) पूर्ण है, एवं प्रति काण्ड में कतिपय वर्ग से विभक्त है।

प्रथम काण्ड में—भावविकारवर्ग, बुद्धिवर्ग, अन्तःकरणवृत्ति-वर्ग, वाक्क्रियावर्ग एवं ध्वनिक्रियावर्ग विन्यस्त है।

द्वितीय काण्ड में—मनुष्यचेष्टावर्ग, ब्रह्मचेष्टावर्ग, क्षत्रिय-चेष्टावर्ग, वैश्यचेष्टावर्ग एवं शूद्रचेष्टावर्ग है।

तृतीय काण्ड में—प्रकीर्णवर्ग, सनादिवर्ग, नानार्थवर्ग, एवं अकर्मक धातु का निरूपण है।

ग्रन्थ के आरम्भ में आदर पूर्वक भट्टमल्ल का नाम लिखित हुआ है। "भट्टमल्लैर्विरचिता याद्भुताख्यात-चन्द्रिका।

ततः संगृह्यते प्रायः प्रयुक्तो धातुसञ्चयः ॥१॥

सत्तायामस्ति भवति विद्यते, चाथ जन्मनि।

उत्पद्यते जायते च सम्भवत्युद्भवत्यपि ॥२॥"

ग्रन्थ के अन्तिममें लिखित है—

"मुदा यथार्थ-नाम्नीयं कविसारङ्ग-रङ्गदा।

सेव्यतां कोविदगणैः प्रयुक्ताख्यातमञ्जरी ॥"

श्रीचैतन्यदेव के मतमें विश्वजनीन प्रेमधर्म ही परम पुरुषार्थ है। परम-पुरुषार्थस्वरूप प्रेमधर्म का आचरण-पूर्वक

प्रचार कार्यमें रत षड्‌गोस्वामी—श्रीरूप, श्रीसनातन, श्रीरघुनाथ भट्ट, श्रीगोपालभट्ट, श्रीरघुनाथदास एवं श्रीजीवगोस्वामी का नाम सुप्रसिद्ध है। इन षड्‌गोस्वामी के एकतम प्रस्तुत ग्रन्थ-प्रणेता श्रीरूपगोस्वामिचरण हैं।

कर्णाट प्रदेश के यजुर्वेदीय भरद्वाज-गोत्रीय विप्रकुलमें आपका जन्म हुआ था। तदानीन्तन गौड़ के बादशाह होसेन शाह के आप विशिष्ट आमात्य थे। अनन्तर समस्त विषय परित्याग-पूर्वक श्रीचैतन्यदेवके श्रीचरणों में आत्मसमर्पण किये थे। इनके श्रीगौराङ्गदेवके प्रति अनुराग से गृहत्याग, दैन्य एवं विषय-वैराग्यादि जन-समाजमें सुप्रसिद्ध हैं। श्रीकृष्णदास कविराज गोस्वामि प्रणीत श्रीचैतन्यचरितामृत एवं भक्तमाल प्रभृति ग्रन्थमें वर्णित आपकी सविस्तार जीवनी आलोच्य एवं आस्वाद्य है। श्रीनरोत्तम ठाकुर महाशय 'प्रेमभक्तिचन्द्रिका' नामक ग्रन्थमें इनको यथार्थतः 'श्रीचैतन्यमनोऽभीष्ट स्थापक' कहे हैं।

श्रीवृन्दावन के लुप्ततीर्थ उद्धार, श्रीगोविन्ददेव की सेवा का प्रवर्त्तन एवं भक्ति-शास्त्र प्रचार हेतु आप श्रीगौराङ्गदेव कर्त्तृक विशेष रूपसे उपदिष्ट हुए थे।

प्रयाग से श्रीरूपगोस्वामिचरण श्रीवृन्दावन गमन किये थे। वहाँ से घरमें लौट कर विषयों की सुव्यवस्था करके नीलाचलमें श्रीमन्महाप्रभु श्रीचैतन्यदेव का दर्शन किए थे।

गौड़देशमें अवस्थान के समय ही आप 'विदग्धमाधव' एवं 'ललितमाधव' नामक नाटकद्वय की रचना करने के लिए उत्सुक हुए थे। व्रजलीला एवं पुरलीला का वर्णन एक ही नाटक में करके व्रज-विरह प्रशमन करने की इच्छा होने पर भी सत्यभामा पुरमें सत्यभामादेवी के आदेश से एवं नीलाचलमें श्रीमन्महाप्रभु के साक्षात् उपदेश से पृथक् रूप से नाटक-द्वय का प्रणयन आप किए थे।

भक्तवृन्द के सहित श्रीमन्महाप्रभु इनकी रचना को सुनकर अतिशय आनन्दित हुए थे। इसका विवरण श्रीचैतन्यचरितामृत ग्रन्थ में विशद रूपसे है। सर्वशक्ति-सञ्चार-पूर्वक श्रीमन्महाप्रभु इनको श्रीवृन्दावन में आचार्य्य पदमें प्रतिष्ठित कर निजाभीष्ट पूर्त्ति किए थे।

श्रीरूपगोस्वामि-रचित ग्रन्थावली—१। भक्तिरसामृतसिन्धु, २। उज्ज्वलनीलमणि, ३। लघु-भागवतामृत, ४। विदग्धमाधव, ५। ललितमाधव, ६। निकुञ्जरहस्य स्तव, ७। स्तवमाला, ८। श्रीराधाकृष्ण-गणोद्देश दीपिका, ९। मथुरा माहात्म्य, १०। उद्धवसन्देश, ११। हंसदूत, १२। दानकेलि कौमुदी, १३। श्रीकृष्णजन्मतिथि-विधि, १४। प्रयुक्ताख्यात-मञ्जरी, १५। नाटक चन्द्रिका प्रभृति।

**हरिदासशास्त्री**

---

श्रीश्रीरूपगोस्वामिपभुपादैः खलु जीवनिकाय-हिताभिलाष-परवशतया भट्टमल्लविरचिताख्यातचन्द्रिकामनु प्रयुक्ताख्यातमञ्जरीति संक्षिप्तः क्रियाकोशोऽयं प्रणिन्ये। लघुतोषणीनामिकायाः श्रीमद्भागवत-टीकाया उपसंहारे श्रीपादरूपगोस्वामिनां ग्रन्थ-गणनावसरे नास्य समुल्लेखः, भक्तिरत्नाकरे किल प्रथमतो नाम प्रयुक्ताख्यातचन्द्रिकेति भ्रमात्मकमेवेति प्रेक्षावद्भिर्विभाव्यम्। वाराणसीतः मुद्रिताख्यातचन्द्रिकाया भूमिकायां क्रियाकोशानां गणनायामस्योल्लेखेऽपि॥ रचयितृनामनिर्देशे सम्पादकस्य

---

**॥ आख्यातचन्द्रिका (भट्टमल्लस्य), क्रियाकलापः (विद्यानन्दस्य), क्रियापर्यायदीपिका (वीरपाण्डयस्य), क्रियाकोश (रामचन्द्रस्य),**

विचिकित्सा समभूत्। कलिकातानगरीतः छात्रपुस्तकालयाद् गौड़ाक्षरैर्मुद्रितसंस्करणेऽपि सन्देहास्पदत्वमासीत् यतः प्रतिवर्गमनु 'इति प्रयुक्ताख्यात-मञ्जर्य्यामिति' लेख-समुल्लासेऽपि तिपत्रशिरसि (Heading) प्रयुक्ताख्यात-चन्द्रिकेति नामादृश्यत। परन्तु ग्रन्थान्वेषणावसरेऽस्माभिः श्रीवृन्दावने श्रीदामोदर-ग्रन्थागारे, श्रीविनोदवागमन्दिरे, जयपुरीय-श्रीगोविन्द-ग्रन्थालये, विकानीर-राजग्रन्थागारे, वराहनगरीय-श्रीगौराङ्ग-ग्रन्थमन्दिरे एवं बहुत्र च प्रयुक्ताख्यात-मञ्जरीति हस्तलिपिरसकृद्दृष्टा। प्रयुक्ताख्यातचन्द्रिकेति श्रीरूपगोस्वामिपाद-कृत-ग्रन्थनाम-विमर्षे तथाख्यातचन्द्रिका-भूमिकायां कविसारङ्ग-कर्त्तृकतायाश्च सन्देहे जाते सङ्कलनेऽस्या हतादरोऽभवम्। जयपुरीय-ग्रन्थालये खलु श्रीमत्श्रीरूप-हस्ताक्षरैः स्थलविशेषे चूर्णिकासमायुक्तां पुस्तिकां दृष्ट्वा एषैव श्रीरूपपादकृतेति मे सम्मतं मतम्। उपसंहारस्थितस्य कविसारङ्गरङ्गदेति पदस्य सारङ्गेति नाम कवेर्नेति निर्णयोऽपि सञ्जातः, गौड़ीयवैष्णव-साहित्ये सारङ्गरङ्गदेति१ रसिकरङ्गदेति२ टीनानामैवासकृद्दृश्यते। अतो ग्रन्थोऽयं श्रीरूपपादकृत इति स्थिरो विश्वासो जातः। गीर्वाणवाणी-प्रणयिनां प्रीतयेऽधुनास्य मुद्रणं कृतम्। श्रीपाद-हस्तलेख-प्रतिविम्ब-समुल्लसितमिति येनास्य प्रणयितृविषयक-सन्देहलेशोऽपि न स्यादिति।

---

प्रयुक्ताख्यातमञ्जरी (कविसारङ्गस्य ?), **क्रियारत्नसमुच्चयः (गुणरत्नसूरेः), धातुरूपभेदः (दशबलस्य वरदराजस्य), कविरहस्यः (हलायुधस्य)।**

**१ श्रीकृष्णकर्णामृतस्य श्रीकृष्णदासकविराजगोस्वामिनां तथा लघुभागवतामृतस्य श्रीबलदेवविद्याभूषणानां टीका – सारङ्गरङ्गदेति।**

**२ लघुभागवतामृतस्य श्रीवृन्दावनचन्द्र-तर्कालङ्काराणां तथा पद्यावलीमनु श्रीवीरचन्द्रगोस्वामिनां टीका—रसिकरङ्गदेति।**

# पर्याय-सूचिका

[ अङ्क-पर्यायाः श्लोक-पृष्ठयोरिति ज्ञातव्यम् ]

तक्षणे २।३५, तन्द्रायां ३१।६, तरति १६।४२, तर्जने १२।११, तर्पणे १६।२१, तर्षे १८।२१, ताड़ने ६६।२८, तायते १०।४१, तिरश्चां ध्वनौ ५।१३, तुल्ये १५।३२, तृप्तौ २६।१७, तैक्ष्ण्यकरणे ३।३५, तैललेपे ८।१५, तोषणे २३।२२, त्यागे ३३।१८, त्रासने ६३।२८, त्रिःकृषौ ३।३१, त्वङ्गति ६।४१, त्वरायाम् १७।२५।

थुत्कारे ३८।१८।

दंशने २६।१७, दण्डे ३।२३, दधाति (अदादि) ३।४२, दन्तच्छदे २४।१७, दम्भे १८।८, दम्भेच्छायां २०।२६, दयते ८।४१, दाने १४।२१, दीक्षते १३।४१, दीप्तौ १५-१६।१६, दीर्घीकरणे ८।३७, दीव्यति (दिवादि) १।४२, दुःखित्वे ३०।६, दुर्गतौ ६।३७, दुष्कृतौ १७।३६, दूरीकरणे ७।३७, दृप्यति (दिवादि) २।४३, दैन्ये २६।६, दोहने २७।३३, द्रवगतौ ४२।२६, द्रवीकृतौ ४२।३४, द्रोहे १८।८, द्वार-प्रवेशने १७।२४, द्विःकृषौ २।३१, द्विधाकृतौ ८६।३०, द्विरुक्तौ ४।१०, द्वेषे ४।७।

धमति १८।४२, धान्यच्छेदे ६।३५, धापने २०।२१, धारणे, ६।२३, धावति १६।४२, धुक्षते १३।४१, धुनने ६०।२८, ध्याने, १७।५, ध्वनौ १।१३।

नक्षति १६।४२, नखक्षते ३१।१८, नटने १६।१७, नाथति नाथते ३।४०, नाशने ८४।३०, निःसरणे २८।२५, निक्षेपे २२।३२, निगीर्णे २५।१७, निन्दायां १०।१०, निराकृतौ २६-३०।१२, निरोधने ५६।२८, निर्णये १२।४, निर्यातयति ३।४४, निर्वेदे २४।८,

※ श्रीश्रीगौरगदाधरौ विजयेताम् ※

# प्रयुक्ताख्यात-मञ्जरी

## प्रथमः काण्डः

श्रीराधागोविन्ददेवौ जयताम्

### [ भाव-विकार-वर्गः ]

भट्टमल्लैर्विरचिता याऽद्भुताख्यात-चन्द्रिका ।
ततः संगृह्यते प्रायः प्रयुक्तो धातु-सञ्चयः ॥१॥

सत्तायामस्ति भवति विद्यते, चाथ※ जन्मनि ।
उत्पद्यते जायते च सम्भवत्युद्भवत्यपि ॥२॥

अङ्कुराद्युद्भवे प्रायः प्ररोहति विरोहति ।
निष्पद्यते फलति च सिद्धौ साध्यति१ सिध्यति२ ॥३॥

निर्वर्त्तते च पश्चाथ स्थितौ वसति तिष्ठति ।
वर्त्तते निवसत्यास्ते ध्रियते चावतिष्ठते ॥४॥

---

१ । सिध्यति (ख), २ । राध्यति (ख) ।

※ त्वन्ताथादि न पूर्वभागित्यमर-परिभाषाऽत्र ।

---

'क' — वराहनगरीय-श्रीगौराङ्गग्रन्थमन्दिरस्था करलिपिः ।

'ख' — जयपुरीय-श्रीगोविन्दग्रन्थागारस्था करलिपिः ।

जीवति श्वसिति प्राणित्युर्जयत्यपि **जीवने** ।
स्यात् प्रत्युज्जीवति-पदं **पुनर्जीवन** वाचकम् ॥५॥
प्रश्वसित्यपि **निश्वासे** तथा निश्वसितीत्यपि ।
**परिणामे** परिणमत्यात्मनेपि च वर्त्तते१ ॥६॥
ऽ सम्पद्यते कल्पतेऽथ **वृद्धौ** बृंहति बर्धते ।
विपोलत्येधते स्थूलयते पुष्यति चेति षट् ॥७॥
**बुद्धि-भेदे समृद्धयाख्ये** समृद्धयति महीयते ।
आप्यायते स्फायते च क्रमते प्रथतेऽपि च ॥८॥
ऋध्यतृध्याप्नोति च तथापूर्यते च नव क्रियाः ।
**वृद्धौ तु सविकारायां** श्वयत्युच्छ्रयतीत्युभे ॥९॥
स्फुटति स्फोटते फुल्लत्युन्मीलत्यपि पुष्यति ।
विजृम्भते विकचते **विकाशे** विकसत्यपि ॥१०॥
उच्छ्वसित्यपि तद्भेदे द्वयमुद्घटतेऽपि च ।
**सङ्कोचे** निमिषत्यत्र मुकुलीभवतीति च ॥११॥
संङ्कुचत्यपि पञ्च स्युर्मीलत्यपि निमीलति ।
अथो **जरायां** जरति जीर्यत्यपि जृणाति च ॥१२॥
**विदीर्णत्वे** विदलति विशीर्यति च सीदति ।
विदीर्यति स्फोटति च फलतीति च षट् क्रियाः ॥१३॥
**ह्रस्वत्वे** खर्वति ह्रस्वत्यत्र न्यञ्चत्यवाञ्चति ।
निकृष्यते **त्वनुत्कर्षे** हीयते चापकृष्यते ॥१४॥
**कर्मकर्त्तरि** पञ्चापक्षीयते चापचीयते ।
कुञ्चत्यल्पीभवत्यत्र घट्टते च विदस्यति ॥१५॥

---

१ । विवर्त्तते (ख)। ऽ परिणामभेदे द्वयमित्यपरे ।

दीयते क्षयतीत्येतत् पदाष्टकमपक्षये ।
अवघट्टत इत्येतन्निम्नगादेरपक्षये ॥१६॥
सप्त प्रध्वंसते व्येति विनश्यति विलीयते ।
प्रलीयते **विनाशे** स्युः प्रणश्यति विपद्यते ॥१७॥
परैति प्रैति **मरणे** म्रियते च प्रमीयते ।
सन्तिष्ठते समाप्नोति विरम्यत्यारमत्यपि ॥१८॥
पर्यवस्यत्युपरमत्यात्मनेऽपि क्रियाद्वयम् ।
विविधायां क्रिया-षट्कं **समाप्ताविदमीक्ष्यते** ॥१९॥
**निर्वायत्यर्चिषः-शान्तौ** निर्वात्यप्यत्र शाम्यति ।
इति भाव-विकाराः षट् सभेदाः प्राय ईरिताः ॥२०॥

**इति भाव-विकारवर्गः ।**

---

## [ बुद्धिवर्गः ]

**स्फुर्त्तौ** सप्ताविरस्त्याविर्भवति प्रादुरस्ति च ।
प्रादुर्भवति निर्भाति स्फुरति प्रतिभासते ॥१॥
**ज्ञाने** जानाति जानीते वेत्ति वेदावबुध्यते ।
प्रत्येति मनुते चोपलभते प्रतिपद्यते ॥२॥
अवगच्छति चावैति मन्यते चाधिगच्छति ।
विना कर्मात्मनेऽपि स्यात् संवेत्तीति चतुर्दशः ॥३॥
गृह्लाति च क्वचिज् **ज्ञाने** नी-वदो च क्वचिद्यथा ।
विद्यासु नयते प्राज्ञो वदते तासु पण्डितः ॥४॥
चित्ते मनस्युरसि च करोति कुरुते पदे ।
**मनसागोचरीकारे**, **मनस्वित्वे** मनस्यति ॥५॥

विभ्राम्यति विपर्येति विपर्यस्यति **विभ्रमे** ।
भ्रमति भ्राम्यतीत्येतौ१ **विमतौ** तु विमन्यते ॥६॥
क्रियात्रयं विवदते तथा विप्रतिपद्यते ।
संदिग्धेऽपि च संदेग्धि संशेते विचिकित्सति ॥७॥
क्रिया-चतुष्कं **संदेहे**, **विचारे** तु क्रिया दश: ।
मीमांसते चर्चयति चिन्ते च विमृशत्यपि ॥८॥
तथा परामृशति च विचारयति चात्मने ।
अन्वीक्षतेऽनुसन्धत्ते स्यात् परस्मैपदेऽप्यसौ ॥९॥
इत्यप्युपालोचते द्वौ पर्यालोचत इत्यमू* ।
वितर्कयत्युन्नयति तथोत्प्रेक्षत ऊहते ॥१०॥
उत्पश्यति **वितर्के**ऽथ विविनक्ति **विवेचने** ।
विवेवेक्त्यात्मनेऽप्येतौ स्याद् विवेचयतीत्यपि ॥११॥
निश्चिनुते निर्णयते निर्णयनि च **निर्णये**ऽध्यवस्यति च ।
निष्टङ्कयति च सप्त च, निर्धारयतीह निश्चिनोति स्यु: ॥१२॥
विश्रम्भते२ तु प्रत्येति विश्वसित्याश्वसित्यपि ।
श्रद्धत्ते श्रद्दधातीति **विश्वासे** षट् क्रिया मता: ॥१३॥
संकल्पयति **सङ्कल्पे**ऽभिसंधत्त इति द्वयम् ।
अपध्यायत्यपध्याने दु:सङ्कल्पयतीति च ॥१४॥
लक्षीकरोत्युद्दिशति स्यादुद्देशे क्रियाद्वयी ।
साक्षात्करोत्यात्मनेऽपि **प्रत्यक्षे**ऽध्यक्षयत्यपि ॥१५॥
साक्षयत्यपि चाध्यक्षीकरोत्यनुभवत्यपि ।
मिमीते मायते माति मिनोति मिनुते तथा ॥१६॥

---

१ । भ्रम्यतीत्येता (ख) । * उपालोचयति, पर्यालोचयति ।
२ । विस्रम्भते (ख) ।

**प्रमानुमोपमासु** स्युः क्रमात् प्रानूप-पूर्वकाः ।
**ध्याने** चिन्तयति ध्यायत्यमी भावयति त्रयम् ॥१७॥

**स्मरणे** त्वभिजानाति स्मरत्यध्येति च त्रयम् ।
उत्कण्ठते तथोत्कण्ठत्युत्कण्ठयति चेत्यपि ॥१८॥

पञ्चैवो**त्कलिकायां** स्युराध्यायत्युन्मनायते ।
प्रत्यभिजानात्यनुसन्धत्ते प्रतिसन्दधात्यपि च ॥१९॥

प्रतिसंधत्ते प्रत्यवमृशतीमाः **प्रत्यभिज्ञाने** ।
**विस्मृतौ** विस्मरति च तथैव प्रस्मरत्यपि ॥२०॥

**मोहे** विचेतीभवति विमुह्यति च मूर्च्छति ।
ऋच्छत्यपि **प्रमादे** तु स्रंसते विमनायते ॥२१॥

प्रमाद्यतीति विमनीभवतीति चतुष्टयम् ।
समादधात्यवदधात्यपि प्रणिदधाति च ॥२२॥

आत्मने **चावधाने** स्युरवधारयतीत्यपि ।
**अङ्गीकारे** प्रतिश्रृणोत्यत्र संगिरतेऽपि च ॥२३॥

अकर्मकं संश्रृणुते परस्मै चेत् सकर्मकम् ।
उरर्यूर्युररीभ्यश्च करोति कुरुते पदे* ॥२४॥

अष्टौ स्युः प्रतिजानीतेऽभ्युपैत्यभ्युपगच्छति ।
**अनुज्ञाने**ऽनुमनुतेऽनुजानात्यनुमन्यते ॥२५॥

अत्रैवाभ्यनुजानाति चतस्रोऽथ **विलोकने** ।
निर्वर्णयति निध्यायत्यालोकयति पश्यति ॥२६॥

---

* उरीकरोति इत्यादि ; उररी, ऊररी, ऊररि, ऊरी, उरी—एते पञ्च शब्दा अङ्गीकारे विस्तारे च वर्तन्ते

निरूपयति संपश्यत्यात्मने स्यादकर्मकम् ।
आलोकते लक्षयते निभालयत ईक्षते ॥२७॥
निचायत्यात्मनेऽपि द्वौ निशामयति चेत्यपि ।
लोचते लक्षयति च क्रियाः पञ्चदशोदिताः ॥२८॥
शृणोत्याकर्णयति च तद्वन्निशमयत्यपि ।
निशाम्यतीति **श्रवणे**, **घ्रातौ** जिघ्रति शिङ्घति ॥२९॥
स्पृशत्यामृशति **स्पर्शे**च्छुपत्यालभतेऽपि च ।
**आस्वादने** रसयति लेढि चास्वादयत्यपि ॥
लीढे चेति चतुष्कं स्याद् बुद्धिवर्गोऽयमीरितः ॥३०॥

**इति बुद्धिवर्गः ।**

## [ अन्तःकरण-वृत्तिवर्गः ]

अभिलष्यत्यभिलषत्यात्मनेऽप्यनुरुध्यते ।
आकाङ्क्षति स्पृहयति नाथते वष्टि लिप्सते ॥१॥
आशंसते कामयते वाञ्छतीच्छत्यभीप्सति ।
समीहते तथाशास्ते **वाञ्छायां** तिथि-संज्ञकाः ॥२॥
**लोभे** त्रयं लुभ्यतीति धनायति च गृध्यति ।
उद्युङ्क्ते तु प्रयतते क्रमते च व्यवस्यति ॥३॥
उत्सहत्यात्मनेऽपि स्यात् **प्रयत्ने** पद-पञ्चकम् ।
विप्रीयतेऽपरजति द्वेष्टि **द्वेषे**ऽपरज्यति ॥४॥

विरुणद्धि विगृह्णाति पञ्चामी चात्मनेपदे।
वैरायते तु विद्वेष्टि विराध्नोति विरुद्ध्यते ॥५॥
विराध्यति च वैरे स्यात्तथा व्युत्तिष्ठतेऽपि च।
असूयत्यभ्यसूयायामीर्षायामीर्ष्यतीर्क्ष्यति ॥६॥
सघर्षति स्पर्धते च स्पर्धायां प्रतिगर्जति।
मोदते ह्लादते हृष्यत्यानन्दयति तुष्यति ॥७॥
प्रीणाति प्रीयते प्रीतौ निर्वृणोत्यात्मनेऽपि च।
प्रचेतीभवतीत्यत्र प्रमनीभवतीति च ॥८॥
सुमनायत इत्येव सुमनीभवतीत्यपि।
सुखायते च निर्वातीत्येताः प्रोक्ताश्चतुर्दश: ॥९॥
लज्जते त्रपते मन्दाक्षयत्यपि हृणीयते।
जिह्रेतीति ह्रियां पञ्च, बिभत्युद्विजते भये ॥१०॥
त्रसति त्रस्यति तथा क्षमायां तु तितिक्षते।
सहतीत्यात्मनेऽपि स्यात् त्रयं मृष्यति मर्षति ॥११॥
क्षाम्यति क्षमते चेति सप्त साहयतीत्यपि।
अनादरेऽवजानाति तथा परिभावत्यपि ॥१२॥
एकादश अवगणयत्यवधीरयतीति च।
असत्तिरोभ्यां कुरुते परस्मैपदभागपि ॥१३॥
तथाऽवमनुते चावमानयत्यवमन्यते।
विमानयति चात्रावहेलयत्यपि हेडते ॥१४॥
वञ्चने विप्रलभते तथा वञ्चयतेऽपि च।
आत्मने च द्वयं विप्रकरोति निकरोति च ॥१५॥
अत्रोल्लापयते चाभिसन्धत्ते छलयत्यपि।
प्रतारयति चैवाभिसन्दधाति विचत्यपि ॥१६॥

द्वादश स्युर्गर्धयते१ प्रलोभयति चेत्यपि ।
प्रस्तोभयति तद्भेदे तथा प्रोत्साहयत्यपि ॥१७॥
दम्भ-क्रियायां दम्नोति तथैव दम्भयत्यपि ।
जिघांसति द्रुह्यति च द्रोहे व्यापादयत्यपि ॥१८॥
अपाद्राध्यति राध्नोति रध्यतीत्यपराधने ।
अपकारेऽपकुरुते क्षिणोत्यपकरोति च ॥१९॥
षश्च क्रोधे संरभते रुष्यति कुप्यतीति च ।
भामते कुप्यतीति स्यादागृह्णात्यात्मनेऽपि च ॥२०॥
अभि-पूर्व्वं निविशते निर्बध्नात्याग्रहे त्रयम् ।
करुणायान्तु दयतेऽनुगृह्णात्यात्मनेऽपि च ॥२१॥
कृपायते च करुणायते चाप्यनुकम्पते ।
अनुक्रोशत्यपि स्युः षट् तद्भेदे तु प्रसीदति ॥२२॥
शोके तु शोचतीत्येकं विषीदत्यनुतप्यते ।
अनुशेतेऽनुतपति पश्चात्तापे क्रिया मताः ॥२३॥
निर्विद्यते तु निर्वेदे निर्विण्णाभवतीत्यपि ।
क्रियाद्वयं विलपति विलापे परिदेवति ॥२४॥
रोदित्यश्रयति क्रन्दत्यपि वाष्पायतेऽपि च ।
अनुरज्यत्यनुरजत्यात्मनेऽपि पदद्वयम् ॥२५॥
प्रीयते स्निह्यति तथा स्नेहे पद-चतुष्टयम् ।
गर्वेऽभिमनुते गर्वयते दृप्यति माद्यति ॥२६॥
अहङ्करोत्यात्मनेऽपि क्षीवते चाभिमन्यते ।
गर्वत्युद्धन्त्यथोन्मादे लोड़त्युन्माद्यतीति च ॥२७॥

---

१ । गर्धयति (ख) ।

ताम्यति क्लाम्यति **ग्लानौ** ग्लायति क्लामतीति च ।
मलिनीभवति **म्लानौ** म्लायत्यपि पद-द्वयम् ॥२८॥
खिद्यते ग्लेपते **दैन्ये,** श्राम्यतीति **परिश्रमे** ।
तथैवायस्यतीत्यत्र प्रयस्यति पदत्रयी[1] ॥२९॥
क्लिश्यते व्यथते दुःखायते कृच्छ्रायतेऽपि च ।
दूयते चेति **दुःखित्वे, जुगुप्सायां** जुगुप्सते ॥३०॥
बीभत्सतेऽथ **जृम्भायां** जृम्भते जम्भतेऽपि च ।
प्रमीलतीति **तन्द्रायां** घूर्णते प्रचलायते[2] ॥३१॥
शेते निद्राति निद्रायत्यपि निद्रायतेऽपि च ।
तथा संविशति **स्वापे** स्वपित्यपि च षट् क्रियाः ॥३२॥
प्रबुध्यते तु जागर्ति **जागर्यायां** पदद्वयम् ।
**प्रबोधने** चेतयते[3] प्रबोधयति चेत्यपि ॥३३॥
हसत्यकर्मकं **हासे** प्रहासे तु सकर्मकम्※ ।
स्मयते हसिते स्वल्पे[4] गर्ह्ये कुस्मयते स्मिते ॥३४॥
मध्यमे स्याद्विहसति सुप्रौढेऽपहसत्यदः ।
सनिन्दे तूपहसति **परिहासे** तु भण्डते ॥३५॥
तथा परिहसत्यत्र **विस्मये** तु पदद्वयम् ।
विस्मेरीभवतीत्यत्र तथा विस्मयतेऽपि च ॥३६॥

**इत्यन्तःकरण-वर्गः ।**

—SSSSSS—

---

१ । पदद्वयी (ख), २ । प्रचलीयते (ख) । ३ । चेतयति (क) ४ । मन्दे (ख) । ※ गोपीं हसति कृष्णः ।

## [ वाक्क्रियावर्गः ]

आचष्टे वक्ति वदति लपयत्याख्याति भाषते।
अभिधत्ते परस्मै च ब्रूते व्याहरते त्रयम् ✓ ॥१॥
गृह्णात्युदीरयति च कीर्त्तयत्यालपत्यपि।
गदत्यपि भणत्यत्र कथयत्यपि शंसति ॥२॥
उक्तावावेदयति च क्रिया अष्टादशोदिताः।
प्रलापे तु प्रलपति कुत्रचिज्जल्पतीति ॥३॥
आम्रेड़यति तु द्विस्त्रिरुक्तौ संजागदीत्यपि।
अनुवादेऽनुवदनेऽनुवक्तीत्यादयोऽपि च ॥४॥
पठत्यधीतेऽध्ययने, शिक्षणे शिक्षते त्रयम्।
अभ्यस्यत्यामनति च, पाठने पाठयत्यपि ॥५॥
शिक्षयत्यनुशास्तीति चतस्रोऽध्यापयत्यपि।
वेदमाचष्टे इत्यर्थे वेदापयति सम्मतम् ॥६॥
सत्यापयति सत्योक्तावथ मिथ्याभिशंसने।
आक्षारयत्यभिशपत्यभ्याचष्टेऽभिशंति ॥७॥
अपशब्दयति म्लेच्छत्यपभ्रंशयतीत्यपि।
म्लेच्छयत्यपशब्दे स्युरपभाषत इत्यपि ॥८॥
शपते त्रयमाक्रोशे शपत्याक्रोशतीत्यपि।
मिथ्याकारयते द्वे तदन्यथा द्वेऽसकृत्कृतौ ॥९॥
स्खलति भ्रेषते भ्रेषे* भ्रषतीति पदत्रयम्।
जगुप्सते तु निन्दायां गर्हते गर्हयत्यपि ॥१०॥

---

✓ अभिदधाति, ब्रवीति, व्याहरति।
* 'भ्रेषो भ्रंशो यथोचितात्' इत्यमरः।

आक्षिपत्यात्मनेऽपि द्वे उपक्रोशति निन्दति ।
तथा भर्त्सयते कुत्सयते गर्ह्णति च क्वचित् ॥११॥
भयदे तर्जने तर्जत्यत्र तर्जयतेऽपि च ।
पर्यपाभ्यां वदत्येव * कलंकार्पक-निन्दने ॥१२॥
उपालम्भे प्रतिभिनत्त्युपालभत इत्यपि ।
विक्रोशति तु विक्रोशे फुत्करोत्यात्मनेऽपि च ॥१३॥
स्तुतौ पणायतीट्टे च नौति स्तौत्यात्मनेऽपि च ।
अष्टौ स्तवीतीड्यति वन्दते च प्रशंसति ॥१४॥
क्वचिच्च श्लाघते चेति स्तुतावेव पदं विदुः ।
कत्थने कत्थते अत्र श्लाघते शाड्तेऽपि च ॥१५॥
कवते वर्णयति च कवित्वे कवयत्यपि ।
उपश्लोकयतीत्येषा क्रिया श्लोकैरुपस्तुतौ ॥१६॥
स्यात् प्रत्यभिवदत्याशीर्वाद आशिषयत्यपि ।
निबध्नाति ग्रथति च ग्रथ्नाति ✓ ग्रन्थयत्यपि ॥१७॥
गुम्फने सन्दृभति च गुम्फतीति च षट् क्रियाः ।
समाहरति संक्षेपे संगृह्णाति समस्यति ॥१८॥
संक्षिपत्यात्मनेऽप्येतास्तद्भेदे यन्त्रयत्यपि ।
तथा कूणयते चाथ विस्तारे सप्त कीर्त्तिताः ॥१९॥
विस्तृणोति व्यस्यति च विस्तृणात्यातनोति च ।
चतस्र आत्मनेऽप्येताः प्रपञ्चयति पञ्चमी ॥२०॥

---

* परिवदति, अपवदति । ✓ श्लोकादिरूपेण पदानां ग्रथने, स्रजां ग्रथने च ।

उर्यूरर्युररीभ्यश्च करोति कुरुते पदे ।
व्याख्याति व्याकरोत्यत्र व्याचष्टेऽर्थापयत्यपि ॥२१॥
तथा व्याकुरुते चाथ व्यनक्ति ❀ व्यञ्जयत्यपि ।
करोति प्रादुराविर्भ्यां विवृणोत्यात्मनेप्यमू ॥२२॥
तिष्ठते स्पष्टयति च तथा प्रकटयत्यपि ।
एवं प्रकाशयत्यत्र **विवृतौ** स्फुटयत्यपि ॥२३॥
उद्घाटयत्युद्घटयत्यपि व्यक्तीकरोति च ऽ ।
आकारयत्याह्वयति स्यादाह्वाने क्रियाद्वयम् ॥२४॥
स्यात् **संहूतौ** संह्वयते स्पर्धायां ह्वयते हवे × ।
अनुयुङ्क्ते प्रश्नयति **प्रश्ने** ज्ञीप्सति पृच्छति ॥२५॥
आपृच्छते तु **यात्रादौ**/° तथानुज्ञापयत्यपि ।
**आभिमुख्येन** वचनेऽभिब्रवीत्यभिवक्ति च ॥२६॥
प्रतिवक्त्युत्तरयति प्रत्याहेत्यादयोऽपि च ✓ ।
विज्ञापयति **विज्ञप्तौ** निवेदयति च द्वयम् ॥२७॥
अपह्नुतेऽपजानीते निह्नुतेऽपलपत्यमी ।
**अपह्नवे** निराचष्टे प्रत्याचष्टे निरस्यति ॥२८॥
१समाऽपोहति च प्रत्यादिशत्यपि परास्यति ।
अपाकरोत्यात्मनेऽपि व्युदस्यत्यप्यपास्यति ॥२९॥
प्रत्याख्याति क्षपयति स्यात् परानुदतीति च ।
निराकरोति च पराकरोति च **निराकृतौ** ॥३०॥

---

❀ वाक्क्रियावर्गे उक्ता अपि व्यनक्तीत्यादयो अन्यत्रापि ज्ञेया ।
ऽ विवृतिभेदे त्रयम् । × आहूतौ । /° यात्राद्यर्थमनुज्ञा-प्रार्थने ।
✓ प्रतिपूर्वा वागर्थाः उत्तरे प्रायः । १ निरस्यत्यादयः सप्त आत्मनेऽपि ।

लुञ्चत्यपनयत्येतद्भेदे व्यपनयत्यपि ।
उपमन्त्रयते चोपवदते सान्त्वयत्यपि ॥३१॥
**सान्त्वने**ऽष्ट सामयति तथोपच्छन्दयत्यपि ।
परस्मै चानुनयतेऽनुलोमयति तद्भिदि ॥३२॥
अनुकूलयतीति द्वे सूचयत्यत्र **सूचने** ।
तथा पिशुनयत्येष वाक्क्रियावर्ग ईरितः ॥३३॥

**इति वचनक्रियावर्गः ॥**

---

## [ ध्वनिक्रियावर्गः ]

रवीति रौति नदति ध्वनति ध्यनयत्यपि ।
शब्दायते स्वनति च **ध्वनावष्टौ** रणत्यपि ॥१॥
रम्भते रेभते **शब्दे गवामुक्षणस्तु** नर्दति ।
**मेघस्य** तु स्तनयति तथा रसति गर्जति ॥२॥
स्फुर्जत्यश**नि-निर्घोषे, भीमे** घुरति गर्जति ।
प्रायो **मृग-खगादीनां नादे** कूजति गुञ्जति ॥३॥
**वीणादेः** क्वणति प्रायः कवति कौति **कर्कशे** ।
भषते वुक्कयति च वुक्कतीति **शुनो ध्वनौ** ॥४॥
रिणाति रेषते **वार्के, तिरश्चां** वाश्यते ध्वनौ ।
कुरति घुरतीत्**यार्त्ते, घोरे** ध्वाङ्क्षति **वाशिते** ॥५॥
हेषते ह्रेषते**ऽश्वानां, हस्तिनां** बृंहतीति च ।
वुक्कारयति **सिंहानां, मुत्कण्ठास्वन** आनुते ॥६॥
निष्कूजति तु संक्रीड़त्येते **शकट-घोषणे** ।
हिक्कते हिक्कतीति **द्वे हिक्कायां** क्षौति तु **क्षुते** ॥७॥

काशते **कफजे शब्दे**, सीरते मणतीत्यदः ।
**कौक्षे** कर्दत्य**पानोत्थे** पर्दते शर्द्धते पदे ॥८॥

चीत्करोति क्रेङ्करोति **रथ-कार्मुकयोः** क्रमात् ।
द्वे आत्मनेऽपि **भूषादेः** शिङ्क्ते **गीते** गायतीति ॥९॥

उपवीणयतीत्येत**दुपगाने** हि वीणया ।
उद्घोषत्यु**त्कटे शब्दे** निर्घोषति च ह्लादते ॥१०॥

उत्पूर्वाः शब्द-वाचिन्यः क्रिया **उच्चस्वने** मताः ।
प्रतिपूर्वाः **प्रतिध्वाने**, शब्दवर्गोऽयमीरितः ॥११॥

**इति ध्वनिक्रियावर्गः ।**

अत्र भाव-विकाराणां[1] धियामिच्छादि-कर्मणाम् ।
वाचां तत्सङ्गतानाञ्च पर्यायाः प्राय ईरिताः ॥१२॥

**इति प्रयुक्ताख्यातमञ्जर्यां प्रथमः काण्डः ।**

—:+:—

---

**१। तथा च नैरुक्ताः—जायतेऽस्ति विपरिणमते वर्द्धतेऽपक्षीयते विनश्यतीति क्रमेण षड् भाव-विकारानाहुः ।**

# द्वितीयः काण्डः

अथोच्यन्ते-नृ-विप्रादि-चेष्टा वर्गैः समासतः।
प्रसङ्गतोऽन्याः पर्यायैः क्रमान्नाादि-पदात्मकैः ॥१॥

## [ मनुष्यचेष्टा-वर्गः ]

**आरम्भे** तु प्रक्रमते प्रस्तौतीत्यात्मनेऽपि च।
अथैवारभते चोपक्रमतेऽत्र चतुष्टयम् ॥२॥
**प्रकृतानुसृतौ** चानुबध्नात्युद्घातयत्यपि।
**कृतौ** करोति कुरुते विधत्ते विदधाति च ॥३॥
तनुते वितनोत्यत्र सृजत्युपादयत्यपि।
निर्मीते भावयति निर्माति रचयत्यपि ॥४॥
निष्पादयति निर्वर्त्तयति साधयतीति च।
अनुतिष्ठत्याचरति श्रद्धायुक्ते तु सृज्यते✻ ॥५॥
उत्तिष्ठते तु घटते **चेष्टायां** सप्त चेष्टते।
व्यायच्छते व्याप्रियते प्रवर्त्तते इहेहते ॥६॥
**विड्उत्सर्गे** तु गुवति हदतेऽथावमेहति।
**मूत्रणे** मूत्रयति च प्रस्रवत्यपि च त्रयम् ॥७॥
उन्माष्टुर्घ्य**द्वर्त्तने** चोत्सादयत्युद्वर्त्तयत्यपि।
द्वयं **तलादिभिर्लेपे** म्रक्षयत्यभ्यनक्ति च ॥८॥
**परिधाने** परिदधात्यत्र संवस्त्रयत्यपि।
आच्छादयति वस्ते च परिधत्ते च पञ्चकम् ॥९॥

---

✻ **मालां सृज्यते वैष्णवः।**

**कटीबन्धे** घटयति तथा परिकरोत्यपि ।
**प्रावृतौ** प्रच्छादयति तथात्र प्रावृणोत्यपि ॥१०॥
अनुलिम्पति **चर्चायामु**पदेऽध्यात्मनेऽप्युभे ।
चर्चयत्यथ **भूषादि-ग्रहणे** प्रतिमुञ्चति ॥११॥
आमुञ्चत्यात्मनेऽप्येताः पिनह्यत्यपिनह्यति ।
परिष्करोति **भूषायामा**त्मनेऽलङ्करोत्यपि ॥१२॥
मण्डते मण्डयति च भूषयत्यपि भूषति ।
प्रसाधयत्यथोत्तंसत्य**वतंसे** वतंसति ॥१३॥
अनक्ति कज्जलयति **वीजने** वीजयत्यथ ।
सुरभीकुरुते धूपयति वासयतीत्यपि ॥१४॥
चकास्ति भाषते भाति रोचते च प्रकाशते ।
शोभते भ्राजते राजत्यात्मनेऽप्यत्र दीव्यति ॥१५॥
दीप्यते द्योतते **दीप्तौ** ज्वलत्युल्लसतीत्यपि ।
**नटने** नाटयत्यत्र त्रयं नटति नृत्यति ॥१६॥
हिलतीति तु **हावे**ऽथ कुमारयति खेलति ।
विहरत्यात्मनेऽप्यत्र तथा क्रीड़ति दीव्यति ॥१७॥
खेलायतीह ललति रमते विलसत्यपि ।
आङोऽनुसंपरिभ्यश्च क्रीड़ते **क्रीड़नार्थकाः**❀ ॥१८॥
कूर्दते **प्लुतिखेलायामथानुकरणे** त्रयम् ।
विडम्बयत्यनुकरोत्यात्मनेऽनुहरत्यदः ॥१९॥

---

❀ **आक्रीड़ते, अनुक्रीड़ते, संक्रीड़ते, परिक्रीड़ते ।**

भवेत् प्रतिनिधत्ते तु **साद्दश्ये**ऽत्रानुकल्पत ।
रिङ्गति स्खलतीत्येषा **स्खलने** स्यात् क्रीयाद्वयी ॥२०॥
'तर्षे तृष्यत्युदन्यति पिपासत्यपि तर्षति'१ ।
पिबत्याचामति धयत्यत्र **पाने** च पीयते ॥२१॥
कठिनद्रव्य-संबद्ध-**रसपाने** तु चूषति ।
बुभुक्षते क्षुध्यति च जिघत्सत्यशनायति ॥२२॥
जेमत्यश्नाति चरति भक्षयत्यत्ति खादति ।
भुङ्क्ते तृणोति तर्णोति तथाभ्यवहरत्यपि ॥२३॥
आत्मने च त्रयं* प्सांति जक्षिति प्रत्यवस्यति ।
उपयुङ्क्ते च **भुक्तौ** स्युर्**दन्तच्छेदे** तु चर्वति ॥२४॥
**सध्वनौ** विष्वणत्यव तथा चावष्वणत्यपि ।
**निगीर्णे** तु गिलत्यत्र ग्रसते निगिरत्यपि ॥२५॥
दन्दश्यते दन्दशीति दन्दंशीत्यत्र२ **गर्हिते** ।
**दंशे, विशुद्धे** दशति तथा दंशयते द्वयम् ॥२६॥
अपस्मरत्य**पस्मारे, विरेके** तु विरिच्यते ।
कर्मकर्त्तर्यसौ तत्र भवेदतिसरत्यपि ॥२७॥
**वान्तौ** वमत्युद्गिरति च्छर्दयत्युद्गिलत्यपि ।
निष्ठीव्यतीति **थूत्कारे** द्वयं निष्ठीवतीत्यपि ॥२८॥
**शेषे** परिशिनष्टीति द्वितयं शेषयत्यपि ।
**तृप्तौ** तृप्यति तृप्नोति सुहितीभवतीत्यपि ॥२९॥

---

१ । तर्षे तृष्यत्यमी धित्सत्युदन्यति पिपासति (ख) ।
२ दन्दशत्यत्र (ख) * । तृणोत्यादिकम् ।

विश्राम्यतीति **विश्रान्तौ** क्वचिद् विश्रमते मतम् ।
आस्ते निविशते चोपविशत्यत्र निषीदति ॥३०॥
ऊर्ध्वी भवति चोत्तिष्ठत्यू**र्ध्वत्वे** तिष्ठतीत्यपि ।
अनुक्रामति पर्येति परीयत इति **क्रमे** ॥३१॥
**आदाने** स्वीकारोत्यत्र गृह्णात्यप्यात्मने द्वयम् ।
उपादत्ते गृह्यते लाति षट् स्युः प्रतीच्छति ॥३२॥
**त्यागे** त्यजत्युत्सृजति जहात्युज्झति मुञ्चति ।
उत्सृज्यते विसृजति मुञ्चते रहयत्यपि ॥३३॥
आत्मने स्यात् परिहरत्यत्र मोक्षयतीत्यपि ।
**वर्जने** वारयत्यत्र स्यान्निवारयतीति च ॥३४॥
तथा वृणक्ति* वृङ्क्ते च व्यासेधति निषेधति ।
वर्जयत्यपि सप्तैता, **वरणे** वरयत्यदः ॥३५॥
व्यावृत्यत्र वृणोतीति वृणातीत्यात्मनेऽप्युभे ।
आधत्ते च निधत्ते च निदधात्यादधाति च ॥३६॥
आरोपयत्यर्पयति न्यस्यतीति तथाऽ**र्पणे** ।
विन्यस्यतीति तद्भेदे सन्निवेशयतीति च ॥३७॥
करोति **हस्ते** पाणिभ्यां कुरुते चोपयच्छते ।
विवहत्युद्वहति **चोद्वाहे** परिणयत्यपि ॥३८॥
चत्वारि चात्मने✓ ज्येष्ठेऽनूढेऽत्र परिविन्दति ।
आचोटयत्याचुटति द्वयमेतत्**लक्षते** ॥३९॥

---

* वृणक्तिर्वरणेऽपि । ✓ परिविन्दतीत्यन्तानि ।

परिष्वजत आश्लिष्यत्यालिङ्गत्युपगूहति ।
क्रोडीकरोत्यात्मने द्वावङ्कालयतीति च ॥४०॥
सप्त स्युः **परिरम्भे**, परिरभतेऽप्यथ **रिरंसायाम्** ।
कामयतेऽत्र वृषस्यति, रिरंसते चेत् परयोषितम् ॥४१॥
अश्वस्यति तु यद्यश्व **चुम्बने** चुम्बतीत्यदः ।
व्यवैति संविशत्यत्र निधुवत्यपि **मैथुने** ॥४२॥
मिथुनीभवतीत्यत्र संप्रयुङ्क्ते यभत्यपि[1] ।
उपभुङ्क्ते **तूपभोगे** संभुङ्क्ते निर्विशत्यपि ॥४३॥
प्रसूयते प्रसूते च **गर्भ-मोक्षे** विजायते ।
प्रजायते जनयति प्रसौतीति षडीरिताः ॥४४॥
**गर्भमोक्षादि-संक्लेशे** द्वयं कुथ्नाति कुथ्नति ।
शूलयत्यामयत्यत्र रुजत्यपि **रुजि** त्रयम् ॥४५॥
उल्लाघयति **भैषजे** भिषज्यति चिकित्सति ।
उपवर्हत्युपदधात्यात्मनेऽप्युपवर्हणे ॥४६॥

इति मनुष्य-चेष्टावर्गः ।

---

## [ ब्रह्मचेष्टा-वर्गः ]

**शौचे** नेनेक्ति नेनिक्ते प्रक्षालयति धावति ।
धावते शोधयति च तद्भेदे मार्ष्टि मार्जति ॥१॥
अत्रोपसंस्करोतीति चतस्रो मार्जयत्यपि ।
**पावित्र्ये** तु पुनातीति पुनीते पवतेऽपि च ॥२॥

---

१ । जभत्यपि (क) ।

शुध्यतीति **शुचीभावे** विशुध्यत्यवदाति ।
**स्नाने तु** स्नायति* स्नाति तद्विशेषे तु मज्जति ॥३॥
ब्रुडत्याप्लवते चात्र स्युश्चतस्रोऽवगाहते ।
उपस्पृशति चाचामत्युभे **आचमनार्थके** ॥४॥
**अभिमुख्यागमे**ऽभ्येति तथाभ्यायाति च द्वयम् ।
**अभ्युत्थान-क्रियायान्तु** स्यादभ्युत्तिष्ठतीत्यदः ।
प्राघुणत्य**तिथीभावे** तथाभ्यागच्छतीत्यपि ॥५॥
अभिवादयति **प्रणता**वुपसंगृह्णाति चात्मने द्वितयम् ।
नमति नमस्यति षट् स्युः, प्रणिपतति बन्दते चात्र ॥६॥
अथार्चत्यञ्चति यजत्यपचायति चात्मने ॥७॥
चतस्रः ✓ पूजयत्यत्र महयत्यर्हयत्यपि ।
सभाजयत्यर्चयते महत्याराधयत्यपि ॥८॥
सपर्ययति चाराध्नोत्याराध्यति तथार्हति ।
मानयत्यपि **पूजायामादरे** सत्करोति च ॥९॥
सम्मन्यते चाद्रियते तथा संभावयत्यपि ।
**नीराजने** तु निर्मञ्छत्यत्र नीराजयत्यपि ॥१०॥
शुश्रूषते परिचरत्युपास्ते वरिवस्यति ।
चतस्रः **परिचर्यायां** लालयत्युप**सेवने** ॥११॥
तथोपसेवते चाथ यजते चोपतिष्ठते ।
यजत्यपि **सुरार्चाया**मथ विश्रमयत्यपि ॥१२॥

---

*** ष्णै वेष्टने, धातूनामनेकार्थत्वात् । ✓ अर्चत्याद्याः ।**

संवाहयति चात्र द्वे **पादाद्यङ्गोपमर्दने** ।
**दाने** ददाति दत्ते च ददते वितरत्यपि ॥१३॥
प्रयच्छत्यर्पयति च दिशते दिशति क्वचित् ।
अपवर्जयति स्पर्शयते१ विश्राणयत्यपि ॥१४॥
तथा विलभते राति प्रतिपादयतीत्यपि ।
स्वधाकरोत्यत्मने द्वौ पितृभ्यो निर्वपत्यपि ॥१५॥
जुहोति **हविषामग्नौ प्रक्षेपे** त्रितयं मतम् ।
स्वाहा वौषट् वषड्भ्यश्च करोति कुरुतेऽपि च❀ ॥१६॥
**प्रक्षेपे** तु प्रणिवपत्यत्र२ प्रक्षिप्वतीत्यपि ।
मिनोत्यात्मनेऽपि स्युश्चतस्रः प्रक्षिपत्यपि ॥१७॥
विक्षिपत्यात्मनेऽपि स्या**द्विक्षेपे** विकिरत्यपि ।
**आमन्त्रणे** केतयति निमन्त्रयत इत्यपि ॥१८॥
अत्रामन्त्रयते चाथ **तर्पणे** धिनुतेऽवति ।
धिनोति प्रीणयति च पञ्च तर्पयतीत्यपि ॥१९॥
**अनुज्ञायास्तु करणे**ऽनुजानात्यनुमन्यते ।
धापयत्यात्मनेऽपि द्वौ **धावने** पाययत्यमू ॥२०॥
चूषयत्यादयोऽप्यत्र स्युरथो **परिवेषणे** ।
द्वयं यामयतीत्यत्र परिवेवेष्टि चात्मने ॥२१॥
आदयत्यात्मनेऽप्यत्र भोजयत्यादि **भोजने**× ।
पिपर्त्ति पूरयति च पारयत्यपि **पूरणे** ॥२२॥

---

१ स्पर्शयति (ख); ❀ स्वाहाकरोति, वौषट्करोति, वषट्करोतीत्यादि।
२ प्रतिक्षिपत्यत्र (क)। × आदिशब्दात् खादयति, अभ्यवहारयति, आशयतीत्यादयः।

अत्राप्याययति प्राति पृणातीत्यथ **तोषणे** ।
सुखाकरोति सुखयत्याह्लादयति चेत्यपि ॥२३॥
धिनोत्यानन्दयति च मृड़यत्यादयस्तथा❀ ।
**इज्यारम्भे** दीक्षते च जपतीति त्रिधा **जपे** ॥२४॥
जञ्जप्यते **जपे निन्द्ये** संजपत्यत्र शोभने ।
उपाकरोत्यात्मनेऽपि **संस्काराद्ये** श्रुतेर्ग्रहे ॥२५॥
**अभूक्तौ** तूपवसति लङ्घते व्रतयत्यपि ।
तप्यते तु **तपस्यायां** तपस्यत्यप्युभे क्रिये ॥२६॥
करोति कुरुते **मौण्ड्ये** भद्रमद्रापुरःसरे ऽ ।
'मुण्डयत्यत्र वपति तथा मुण्डयतेऽपि च'१ ॥२७॥
उपेक्षते तथोदास्ते पदे **माध्यस्थ्य वाचिनी** ।
स्युर्विरज्यत्युपरमत्यात्मने विरजत्यमूः ॥२८॥
उपशाम्यति **वैराग्ये** तथा निर्विद्यतेऽपि च ।
मुमुक्षत **मुमुक्षायाममृतीयति** मोक्षते ॥२९॥
प्रत्यश्चति समाधत्त निर्विकल्पीभवत्यपि ।
परिव्रजति **सन्न्यासे** संन्यस्यत्यात्मनेऽप्यदः ॥३०॥
ब्रह्मीभवति कैवल्ये निर्वातीति चतुष्टयम् ।
कर्मकर्त्तरि तत्र मुच्यते चापवृज्यते ॥३१॥

**इति ब्रह्मचेष्टावर्गः ।**

---

❀ आदिशब्दात् तोषयति, हर्षयति, प्रमोदयतीत्यादयः ।
ऽ भद्राकरोति, मद्राकरोति, भद्रङ्करोति इत्यादि ।
१ पंक्तिरियं ख-पुस्तके नास्ति ।

## [ क्षत्रियचेष्टावर्गः ]

**ऐश्वर्य** इन्दतीष्टे च तप्यतेऽधीष्ट इत्यपि ।
**प्रतिष्ठाप्तौ** तु विख्याति प्रख्याति प्रतितिष्ठति१ ॥१॥

**रक्षणे** त्रायत पाति गोपायति भुनक्ति च ।
पिपर्त्ति रक्षति तथा पालयत्यवतीति च ॥२॥

शास्ति **शिष्टौ** शिक्षयति **दण्डे** दण्डयतीत्यदः ।
दाम्यत्यथ **वशीकारे** धारयत्यात्मनेऽपि च ॥३॥

तथा वशीकरोतीति संगृह्णातीति च पूर्ववत् ।
प्रपद्यते तु **शरणागतौ** शरणयत्यपि ॥४॥

परिक्रीणीत इत्येतदुत्**कोचादि-वशीकृतौ**❀ ।
**आयत्तौ** स्यादायतते वशीभवति च द्वयम् ॥५॥

**स्थिरीकृतौ** स्थापयति तथा द्रढयतीत्यपि ।
**धारणार्थे** धारयति दधाति च बिभर्त्ति च ॥६॥

द्वे आत्मने च दधते धरतीति च पञ्चकम् ।
नियुङ्क्त आज्ञापयति निदिशत्यादिशत्यपि ॥७॥

द्वावात्मने **चाज्ञायामथ** प्रस्थापयत्यपि ।
**प्रेषणे** प्रेषयति च प्रेष्यति प्रहिणोति च ॥८॥

**सन्देशे** वाचिकयते सन्दिशत्यात्मनेऽपि च ।
लिखत्य**क्षर-विन्यासे** तथा लिपयति द्वयम् ॥९॥

उद्भालयत **उद्देशकृतावु**द्देशयत्यपि ।
**प्रेरणे** प्रेरयत्यत्र क्षिपतीत्यात्मनेऽपि च ॥१०॥

---

१ च प्रतिष्ठति (क) ।

❀ आदिशब्दात् समयबन्धपूर्वकक्रयादिना च वशीकृतौ ।

कालयत्यस्यति तथा नुदतीति च पञ्चकम् ।
सेवतेऽनुसरत्यत्र भजति श्रयतीति च ॥११॥
आत्मनेऽन१रुणद्धीति तिस्र एवानुवर्त्तते ।
अनुजीवति **सेवायां** जुषतेऽनुचरत्यपि ॥१२॥
वृणीत इति **संभक्तौ** वनतीत्यात्मनेऽपि च ।
सजूःकरोत्यात्मनेऽपि **सङ्गे** सत्राकरोति च ॥१३॥
**प्रापणे** लम्भयत्यत्र हरत्यपि नयत्यपि ।
वहतीत्यात्मनेऽप्येताः प्रापयत्यापयत्यपि ॥१४॥
ये ण्यन्ता गमनार्थास्ते धातवो नीञ्-समार्थकाः ।
विलम्बते कुण्ठति च व्याक्षिपत्यात्मनेऽपि च ॥१५॥
मन्दायते चिरयति **विलम्बे**ऽथ प्रतीक्षते ।
अनुपालयतीत्यत्र प्रतिपालयतीति च ॥१६॥
प्रतिहारयति **द्वार-प्रवेशन-विधौ** क्रिया ।
संभ्राम्यति **त्वरायां** स्यात्त्वरते संभ्रमत्यपि ॥१७॥
अस्यामाविजते चाथ **वैक्लव्ये** विक्लवत्यपि ।
विह्वलत्यत्र टलति **क्लैब्ये** तु क्लीवते क्रिया ॥१८॥
क्लीवायतेऽथ **कौटिल्ये** वल्कते कुटतीत्यपि ।
भुजति न्युब्जति तथा कुञ्चत्यपि समार्थकम् ॥१९॥
**गुप्त-वादे** मन्त्रयते, **भेदे** तूपजपत्यदः ।
**दम्भेच्छायां** धीप्सतीति दिदम्भिषति धिप्सति ॥२०॥
संवर्मयति सनह्यत्यत्र संनह्यतेऽपि च ।
सज्जयत्यपि **सन्नाहे** तथा संशयतेऽप्यदः ॥२१॥

---

१ तु (क) ।

अधिशेतेऽ**धिशयेन**ऽध्या**सने** त्वधितिष्ठति ।
अध्यास्तेऽथाधिवसतीत्**यधिवासे** सकर्मकाः ॥२२॥

षड्मी स्युर**थारोहे** आरोहत्यधिरोहति ।
स्फुरति स्पन्दते **स्पन्दे, चलने** तु चतुष्टयम् ॥२३॥

चलति प्रङ्खति तथा घट्टते वेल्लतीत्यपि ।
उत्सेधति तथोन्नह्यत्युच्छ्रयत्यात्मने द्वयम् ॥२४॥

क्षोभते क्षुभ्यति **क्षोभे, गमने**ऽञ्चति गच्छति ।
प्रतिष्ठते जिहीते च सरति व्रजतीयते ॥२५॥

पद्यते याति चरति सर्पत्ययति चञ्चति ।
ऋच्छति स्रवते गाते चलत्येति च टीकते ॥२६॥

अयते क्रामतार्यत्ति क्रिया द्वाविंशतिर्मताः ।
निर्गच्छति तु निर्याति निष्क्रामति निरेति च ॥२७॥

प्रायो **निःसरणार्थाः** स्युर्निष्पूर्वा गमनार्थकाः ।
तदा त्**वागमनार्थाः** स्युर्यद्याङ्पूर्वा भवन्त्यमी ॥२८॥

स्यात् प्रत्यावर्त्तते प्रत्यायाति व्याघोटतेऽपि च ।
प्रत्याङ्-पुरःसराः **प्रत्यावृत्तौ** स्युर्गमनार्थकाः ॥२९॥

अनु-पूर्वास्त एव स्युः सर्वे**ऽनुगमनार्थकाः** ।
अटति स्यान्**मृदुगतौ** रिङ्गतीङ्गति च त्रयम् ॥३०॥

तुसरति **चञ्चद्गमने** तथा ढोकत इत्यपि ।
लङ्घते तु **प्लुतगतौ** लङ्घत्युत्फुल्लतीति च ॥३१॥

भेदे प्लुतगतेरेव वल्गति प्लवते द्वयम् ।
उड्डयते तूड्डीयते **ख-गता**वुत्पतत्यपि ॥३२॥

धावति द्रवति **क्षिप्रगमने** जवतीत्यपि ।
अटाट्यते चंक्रमीति द्वयं **भ्रमणिकाविधौ** ॥३३॥

तद्भेदे भ्रमति भ्राम्यत्यपि पर्य्यटतीति च।
बंभ्रमीति **तदाधिक्ये** घूर्णते घूर्णते घूर्णतीति च ॥३४॥
चञ्चूर्यते जङ्गमीति पनीपद्यत इत्यपि।
यङन्ता यङ्लुगन्ताश्च गत्यर्थाः **कुटिले गमे** ॥३५॥
बलते **परिवृत्तौ** स्याद् घोटते परिवर्त्तते।
**अग्रे** पुरति, **नीचैस्तु*** फक्कत्यतति **सन्तते** ॥३६॥
**कुत्सिते** द्राति **विकले** द्वयं खञ्जति खोड़ति।
पवते वाति **वातस्य** वहति प्रवहत्य**पाम्** ॥३७॥
धोरत्यु**त्तम-वाह्यादेर्वत्सस्या**टीकते क्रमे।
उद्गच्छत्य**ुदये** षट् स्युरुज्जिहीत उदीयते ॥३८॥
उदञ्चत्युदयत्येतावात्मने द्वावुदेति च।
गत्यर्थाः प्राय उत्पूर्वा उदयस्याभिधायकाः ॥३९॥
उन्मीलत्युन्नमति च **मेघाद्यभ्युद्गमे** द्वयम्।
आक्रम्यते चाक्रमते ज्योतिःकर्त्तृक उद्गमे ॥४०॥
स्त्यायतीति[१] प्रसरति **प्रसारे** विसरत्यपि।
**सञ्चारे** सञ्चरत्येतत्तृतीयायुक्तमात्मने ॥४१॥
स्रंसतेऽ**धोगतौ** भ्रश्यत्यपि भ्रंशत इत्यपि।
पतत्यपि **द्रवादेस्तु** क्षरति च्यवते तथा ॥४२॥
स्कन्दति श्च्योतति तथा स्रवत्यपा गलत्यपि।
रीयते स्यन्दते चात्र सरतीति क्रिया नव ॥४३॥
विलीयते द्रवति च **कठोर-क्षरणे** द्वयम्।
**अस्तंगमे**ऽस्तमयते निम्लोचत्यस्तमेति च ॥४४॥

---

*** अग्रतो गमने पुरतीति, नीचैर्गतौ फक्कति, नीचैर्गतिरसद्व्यवहारः, शनैर्गमनमित्येके।**　　१ **स्यायतीति (ख)।**

**अन्तर्धाने** तिरोन्तर्भ्यामुभे धत्ते दधाति च ।
अपक्रामत्यपैतीति **नश्यत्यपि** पलायते ॥४५॥
प्रायोप-पूर्वा गत्यर्था **अपयाने** प्रकीर्त्तिताः ।
**पराङ्मुखत्वे** तु परावर्त्तते च पराञ्चति ॥४६॥
अतिक्रामत्युच्चरते तथातिचरतीत्यपि ।
अत्येत्युल्लङ्घयत्याद्या धातवः स्यु**रतिक्रमे** ॥४७॥
निष्कासने निष्क्रमयत्यवकर्षति चात्र हि ।
निष्कालयति निःसारयति चेत्यादयः क्रियाः ॥४८॥
**प्रवासे** तु प्रवसति तथा विवसतीत्यपि ।
रणेऽभिक्रमते शत्रून् प्रत्यभ्येति मतो गतौ ॥४९॥
**अभियोगे**ऽभ्यवस्कन्दत्यभियुङ्क्त इति द्वयम् ।
सेनया त्वभियाने स्यादभिषेणयतीत्यदः ॥५०॥
सन्निकर्षति तु प्रत्यासीदत्यासीदतीत्यपि ।
परस्मै सन्निकर्षते१ सन्निधत्ते च **सन्निधौ** ॥५१॥
**प्राप्तौ** प्राप्नोति लभते विन्दतेऽनुरुणद्धि च ।
अनुरुन्धे भावयते विन्दत्यासादयत्यपि ॥५२॥
व्याप्नोति व्यश्नुते **व्याप्तौ** वेवेष्टीत्यात्मनेऽपि च ।
पर्याप्नोति तु शक्नोति क्षमते प्रभवत्यपि ॥५३॥
कल्पते पारयति च **सामर्थ्ये**ऽत्र पदानि षट् ।
**उद्यमे** चावगुरते उद्गूरयत इत्यपि ॥५४॥
उद्यच्छति तथोद्युङ्क्ते स्युः पश्चोद्यच्छतेऽपि च ।
**वेष्टने** वेष्टत इति परिक्षिपति चात्मने ॥५५॥

---

**१ सन्निकृषते (ख) ।**

परिश्रयति चेति द्वे वेष्टयत्यादयोपि च ।
निरुणद्धि निगृह्णात्यात्मने च द्वौ **निरोधने** ॥५६॥
जयत्याक्रमति तथा धर्षयत्यपि धर्षति ।
विलङ्घयत्यभिभवत्यपि च न्यक्करोति च ॥५७॥
तथा विजयते चास्कन्दतीत्य**भिभवे** नव ।
विशेषयत्य**तिशये** विशिनष्टि प्रकर्षति ॥५८॥
विशेषत्यतिशेते च तथोत्कर्षयतीति च ।
उत्कृष्यते द्वयं कर्मकर्त्तर्यत्रारिच्यते ॥५९॥
विस्माययति विस्मेरयति चित्रीयतेऽद्**भुते** ।
**धुनने** कम्पयत्यत्र तथा वेपयतीति च ॥६०॥
त्रयं धुनोति धूनोति धुनातीत्यात्मनेऽपि च ।
धुवत्येवं धूनयति चलयत्यपि चाष्टकम् ॥६१॥
आन्दोलयति तद्भेदे तथा प्रेङ्खोलयत्यपि ।
दोलयत्यपि च प्रेङ्खयति हिन्दोलयत्यपि ॥६२॥
आविध्यति भ्रमयति विघूर्णयति च त्रयम् ।
विलोड़यति मथ्नाति गाहते मन्थतीत्यपि ।
**त्रासने** त्रासयत्यत्र भाययत्यपि खटति ॥६३॥
प्रयोजकाद्भये भीषयते भापयते च वा ।
तथा कुहयते विस्मापयते चेति तद्भिदि ॥६४॥
**कम्पे** तु कम्पते त्वङ्गत्येजत्यत्र च वेपते ।
लोलतीति क्रियाः षट् स्युः परिप्लवत इत्यपि ॥६५॥
प्रस्विन्नीभवति **स्वेदे** तथा प्रस्विद्यतीति च ।
आहन्ति ताड़यति च **ताड़ने** जासयत्यपि ॥६६॥

हरत्यात्मने चाथ तद्भेदे कुट्टयत्यपि ।
आस्फालयत्यर्दयति तथैवोद्घट्टयत्यपि ॥६७॥
विध्यति च्छिदयत्यत्र **वेधे** भेदयति त्रयम् ।
आहतेऽकर्मकत्वे स्यात् स्वकीयाङ्गे च कर्मणि ॥६८॥
युध्यते संप्रहरते संग्रामयत इत्यपि ।
विगृह्णाति विगृह्णीते **समरे** कलहायते ॥६९॥
निध्वानयति **शंखादेर्ध्वनने**ऽत्र धमत्यपि ।
वीणादेर्वादयत्यत्र तथा वादयतेऽपि च ॥७०॥
क्वाणयत्यत्र रणयत्यपि प्रक्वाणयत्यपि ।
क्ष्वेड़ते **सिंहवदन्नादे, बाहुयुद्धे** नियुध्यते ॥७१॥
**पराक्रमे** वीरयते पराक्रमत इत्यपि ।
उर्जायते१ शूरयते तथा विक्रमतेऽपि च ॥७२॥
प्रगल्भते **प्रगल्भत्वे** 'तत्र चोर्जस्वलायते'२ ।
अरुष्करोत्यात्मनेऽपि व्रणयत्य**ङ्ग-चूर्णने** ॥७३॥
गोकर्तृकायां हिंसायां प्रस्तुम्पति सुड़ागमात् ।
हिनस्ति संज्ञपयति सूदते हन्ति तर्दति ॥७४॥
प्रमाययत्यर्दयते निबर्हयति हिंसति ।
तृणेढि घातयति च शृणात्युज्जासयत्यपि ॥७५॥
प्रतिष्किरत्यालभते कषते मारयत्यपि ।
कषत्युन्माथयत्यत्र क्षिणोतीत्यात्मनेऽपि च ॥७६॥
क्षणोति द्वे विशसति निस्तर्हयति रध्यति ।
षड्विंशतिः सूदयति **हिंसायां** हिंसयत्यपि ॥७७॥

---

१ ओजायते (ख) । २ तथात्र जघनायते (क) ।

क्रुणोति क्रुणुते पुथ्यत्यपि क्रथति तुम्पति ।
मीनात्युन्नाटयत्याद्या हिंसायां विरलोदया: ॥७८॥
**अर्दने** लुम्बयत्यत्र लुम्बत्यर्दत्यपि त्रयम् ।
**पीड़ने** तु व्यथयति क्लिश्नाति च दुनोति च ॥७९॥
तपति ग्लापयत्यत्र बाधते पीड़यत्यपि ।
धूपायति ग्लपयति तुदति क्लेशयत्यपि ॥८०॥
दु:खाकरोत्यात्मनेऽपि तुदते खेदयत्यपि ।
दु:खयत्युत्क्लमयति स्यात् कदर्थयतीत्यपि ॥८१॥
भनक्ति त्रोटयति च रुजत्यामर्दयत्यपि ।
भञ्जयत्यथ तद्भेदे मोटयत्यपि मोटति ॥८२॥
मर्दयत्यत्र मुटति मन्थयत्यथ१ **पेषणे** ।
क्षुणत्ति२ म्रदते क्षुन्ते मृद्नाति च पिनष्टि च ॥८३॥
सञ्चूर्णयत्यथ ध्वंसयति क्षपयतीत्यपि ।
**नाशने** नाशयति च तिस्रोऽथोन्**मूलन** क्रिया: ॥८४॥
उन्मूलयत्युत्खनति तथोज्जटयतीति च ।
उत्पाटयत्युत्खनते षड़् द्धरति चात्मने ॥८५॥
उल्लुञ्चतीति केशादे**रुत्पाटन-विधौ** क्रिया ।
**द्विधाकृतौ** पाटयति फालयत्यंशुकादिन: ॥८६॥
निष्पीड़यति निश्च्योतयति निर्गालयत्यपि ।
**वैरशुद्धौ** प्रतिकरोत्यत्र निर्यातयत्यपि ॥८७॥
**भङ्गे** पराभवत्यत्र पराजयत इत्यपि ।
जयत्यु**त्कर्ष-संप्राप्तौ** द्वयं विजयतेऽपि च ॥८८॥

**इति क्षत्रियचेष्टावर्ग: ।**

---

१ दालयत्यथ (क) । २ क्षणोति (क) ।

## [ वैश्यचेष्टा-वर्गः ]

**कर्षणे** तु कृषत्यत्र कृषते कर्षतेऽपि च ।
रदत्येव विलिखति खनत्यपि हलत्यपि ॥१॥
वीजाकरोत्युप्तकृष्टौ स्याद् द्वितीयाकरोत्यपि ।
शंबाकरोति द्विगुणाकरोति **द्विःकृषौ** त्रयम् ॥२॥
तृतीया-त्रिगुणाभ्याश्च करोति **त्रिःकृषौ** मतम् ।
आख्यातानि खनत्यादीन्यहनीयानि चात्मने ॥३॥
आलोड़यति **सङ्ग्राहे** तथा सङ्ग्राहतेऽपि च ।
**हलि-ग्रहे** हलयति हलिरुक्तो महद्धलम् ॥४॥
वपत्युप्तौ प्रकिरति वपतेऽप्यथ **रोपणे** ।
मूलयत्यपि संरोहयति संरोपयत्यपि ॥५॥
**स्थिरतायां** ध्रवत्यत्र१ मूलति प्रतितिष्ठति ।
**शोषे** तु शुष्यति तथा शुण्ठत्याश्यायतेऽपि च ॥६॥
वायतीति च **सेके** तु सिञ्चत्यार्द्रीकरोति च ।
आत्मनेऽपि द्वयं वर्षत्यार्द्रयत्यपि शीकते ॥७॥
उनत्ति क्लेदयति च क्नोपयत्युक्षतीति च ।
आर्द्रीभवत्या**र्द्रभावे** क्लिद्यति स्तिम्यतीति च ॥८॥
वर्द्धते वर्द्धयत्यत्र बृंहयत्येधयत्यपि ।
**सञ्चये** संविभर्त्तीति सञ्चिनोत्यात्मने त्रयम् ॥९॥
तथैवोपचिनोत्यत्र संभाण्डयत इत्यपि ।
**राशीकृतौ** पुञ्जयति कूटयत्यत्र युग्मकम् ॥१०॥

---

१ ध्रुवत्यत्र (ख) ।

उच्चिनोति शिलत्युञ्छे त्रयमुञ्छयतीत्यपि ।
अवहन्तीति **वैतुष्यकरणे** कण्डयत्यपि ॥११॥

फलीकरोति वितुषीकरोतीत्यात्मने द्वयम् ।
परापुनात्यात्मनेऽपि प्रस्फोटयति तत्समा ॥१२॥

मिमीते मायते **माने** तत्र मातीत्यकर्मकम् ।
तोलयत्यत्र **हेमादि-माने** तुलयतीत्यपि ॥१३॥

पणते दीव्यति तथात्मने व्यवहरत्यदः ।
**व्यवहारे**ऽपमयते परिवर्त्तयतीत्यपि ॥१४॥

विक्रीणीते निमयतेऽवक्रीणीते च **विक्रये** ।
सत्याकरोत्यात्मनेऽपि **तुल्ये** सत्यापयत्यपि ॥१५॥

क्रीणीते विनिमयते क्रीणातीति **क्रये** तिस्रः ।
स्यान्नै**पुण्ये** निपुणति निष्णाति दक्षते चात्र ॥१६॥

**अर्जने**ऽर्जत्यर्जयति **गणने** गणयत्यपि ।
कलयत्यपि संख्याति **गुणने** गुणयत्यपि ॥१७॥

आहन्तीति द्वयं **प्रोञ्छे** प्रोञ्छत्युत्सारयत्यपि ।
तद्भेदे लुम्पते लुम्पत्यत्र मार्जति च त्रयम् ॥१८॥

**विभागे** वण्टयत्यत्र विभजत्यात्मनेऽप्यदः ।
विभाजयत्यंशयति वण्टत्यपि च पञ्चकम् ॥१९॥

तिरस्करोत्यपि दधात्यत्र व्यवदधात्यपि ।
विदधात्यावृणोतीति संवृणोति स्तृणोति च ॥२०॥

स्तृणातीत्यात्मनेऽप्यष्टौ तथा संगोपयत्यपि ।
अपवारयति छादयति स्थगयतीत्यपि ॥२१॥

तिरयत्या**वृतौ** चाथ **निक्षेपे** निक्षिपत्यपि ।
निक्षिप्यत्यात्मनेऽपि द्वौ तथोपनिदधाति च ॥२२॥

न्यस्यति प्रतिदत्तेऽथ निष्क्रयीकुरुते तथा।
स्यात् प्रत्युपकरोत्यत्र निर्ऋणीभवतीति च ॥२३॥
प्रत्यर्पयति तु **न्यासार्पणे** निर्यातयत्यपि।
अपेक्षतेऽभ्यर्थयते वनुतेऽर्दति नाथति ॥२४॥
**याच्ञायां** भिक्षते मार्गयते याचति याचते।
मार्गत्यन्विच्छति गवेषयत्यन्विष्यतीति च ॥२५॥
अन्वेषते मार्गयति विचिनोत्यात्मनेऽप्यदः।
**अन्वेषणे** मृगयते मृग्यतीति नव क्रियाः ॥२६॥
**दोहानुकूल्ये** दुग्धे गौः, प्रस्नुते च **स्वयंस्रवे**।
दोग्धि दुग्धे त्रयमिदं प्रपूरयति **दोहने** ॥२७॥
**स्तवे** तु स्तौत्यथो यौति विप्रयुङ्क्ते वियौति च।
वियोजयति विश्लेषयति चात्र **वियोजने** ॥२८॥
वियुज्यते विघटते तथा विश्लिष्यतीति च।
विच्छिद्यते द्वयं कर्मकर्त्तरि व्यतिरिच्यते ॥२९॥
**मिश्रणे** मिश्रयत्यत्र तथा संयोजयत्यपि।
रूषयत्यत्र१ संमेलयति छुरयतीत्यपि ॥३०॥
संयुनक्ति च सप्तात्र क्रियाः संघटयत्यपि।
संयुज्यते तु संयौति संपृणक्त्यात्मनेऽपि च ॥३१॥
संभिद्यते कर्मकर्त्तर्यत्र संसृजतीत्यपि।
संबध्नाति मिलत्यत्र सङ्गच्छति च **सङ्गतौ** ॥३२॥
विना कर्मात्मने* चात्र तथा सन्निपतत्यपि।
उपसीदत्युपनमत्यत्र स्यादुपकण्ठते ॥३३॥

---

१ तूषयत्यत्र (क)।   * सङ्गच्छते इयं वाणी।

तद्भेदे समवैतीति सचते चासजत्यपि ।
व्यतिषज्यत इत्येतत् पदं स्यात् कर्मकर्त्तरि ॥३४॥
उत्फणत्युच्छलति च तथोद्रिच्यत इत्यपि ।
उत्सिच्यते **तथोत्सेके** द्वितयं कर्मकर्त्तरि ॥३५॥
**उत्क्षेपणे** तून्नयति तथोत्क्षिपति चात्मने ।
उदस्यत्युद्धरति च चत्वार्य्युत्तम्भयत्यपि ॥३६॥
**आनीता**वानयत्येतदाहरत्यपि चात्मने ।
संमार्जयति संमार्ष्टि तथा परिसमूहति ॥३७॥
आत्मनेऽपि च **सम्मार्जे** उपदेग्ध्युपलिम्पति ।
आत्मनेऽपि पदद्वन्द्वं गोमयत्यु**पलेपने** ॥३८॥
**सन्दीपने** ज्वलयति तथा सन्दीपयत्यपि ।
उद्योतयति संधुक्षयति च ज्वालयत्यपि ॥३९॥
**पाके** तु रन्धयत्यत्र पचतीत्यात्मनेऽप्युभे ।
अधिश्रयति च श्राति श्रपयत्यपि रध्यति ॥४०॥
रध्यते पच्यते कर्मकर्त्तृकेऽत्र च राध्यति ।
भर्जते **पाकभेदे** स्यात्त्रयं भृज्जति भृज्जते ॥४१॥
शूलाकरोत्यात्मनेऽपि **शूल-पाके** पदं मतम् ।
**द्रवीकृतौ** लीनयति लयति द्रावयत्यपि ॥४२॥
लालयत्यपि वा लाययति लापयतीत्यपि ।
संदधात्यात्मने चाभिषणोत्या**भिषवे** द्वयम् ॥४३॥
स्वदते रोचते[१] **रुच्यां**, **संस्कृतौ** संस्करोत्यदः ।
आत्मने **प्रतियत्ने** तु स्यादुपस्कुरुते द्वयम् ॥४४॥

**इति वैश्यचेष्टावर्गः ।**

---

१ रुच्यते (क) ।

## [ शूद्रक्रियावर्गः ]

वयते-वयती **व्यूतावूयतेऽथ** विषीव्यति ।
तथा निषीव्यति **स्यूतौ** परिषीव्यति सीव्यति ॥१॥
तक्षति श्यति तक्ष्णोति कृश्यति **क्रशयत्यपि** ।
**तक्षणे** त्वक्षति तथा परिवासयतीत्यपि ॥२॥
**उल्लेखे** उल्लिखत्येक**मुत्कीर्णौ** तूत्किरत्यदः ।
संक्ष्णुते **तैक्ष्ण्यकरणे** क्ष्णौति चोत्तेजयत्यपि ॥३॥
निशिनोति निशीशांसत्यात्मनेऽपि पदद्वयम् ।
**छेदने** कृन्तति छिन्ते छिनत्ति छेदयत्यपि ॥४॥
चछ्यति१ वर्द्धयतीत्यत्र वृश्चतीत्यथ तद्भिदि ।
चोटयत्यत्र चुटति छुटति छोटयत्यपि ॥५॥
प्रायो लुनीते **धान्यादेश्छेदे** दाति लुनात्यपि ।
त्रुटति त्रुट्यति **चछेदे** छिद्यते कर्मकर्तृके ॥६॥
भिन्ते विदारयति च भिनत्ति च **विदारणे** ।
आखण्डयत्यपि स्फोटयति भेदयति द्यति ॥७॥
परीक्षते निकषते **शुद्धतादि-विनिर्णये** ।
प्लोषति प्लुष्यति दहत्योषति ज्वलयत्यपि ॥८॥
मुष्णाति चोरयत्यत्र लुण्ठयत्यपि **मोषणे** ।
आत्मने चापहरति ग्लोचत्यत्र च लुण्ठति ॥९॥
उल्लण्ठत्याच्छिनत्तीति द्वयमेत**द्बलात्कृतौ** ।
प्रसहत्यात्मनेऽप्यत्र हठतीति **बलात्कृतौ** ॥१०॥

---

१ द्यति (ख) ।

निष्कुष्णाति तु **निष्कर्षे** तथा निष्कर्षतीत्यपि ।
स्यान्निष्कुलाकरोत्येतदात्मनेऽत्र तु **सव्यथे** ॥११॥
द्वे निष्पत्रा-सपत्राभ्यां करोति कुरुते पदे ।
लक्षयत्यङ्कयत्यत्र लाञ्छतीति च **लक्षणे** ॥१२॥
सन्दानयति बध्नाति तथा संद्यति कीलति ।
नह्यतीत्यात्मने त्रीणि संयच्छति सिनोति च ॥१३॥
पाशयत्यपि **बन्धेऽथ** विपाशयति **मोचने** ।
विमोचयत्यथ **स्तम्भे** स्तम्भते स्कम्भते तथा ॥१४॥
अथ **स्तब्धीकृतौ** स्तम्भयति विष्कम्भयतीत्यपि ।
प्रतिबध्नाति च तथा **विघ्ने** प्रत्यर्थयत्यदः ॥१५॥
तथा विहन्त्यन्तरेति प्रत्यूहत्यात्मनेऽपि च ।
विघ्नयत्यन्तरयति प्रत्यवैति तु दुष्यति ॥१६॥
दुष्करोत्यघयत्यत्र **दुष्कृते** पङ्कयत्यपि ।
**सन्ततौ** सन्तनोतीति तथा सन्तनुतेऽपि च ।
अत्र सत्रायते सन्तानयतीति चतुष्टयम् ॥१७॥

**इति शूद्रक्रियावर्गः ।**

**इति प्रयुक्ताख्यातमञ्जर्यां द्वितीयः काण्डः ॥**

# तृतीयः काण्डः

प्रकीर्णक-सनाद्यन्त-नानार्थाख्यास्तृतीयके ।
अकर्मकाश्च काण्डऽस्मिन् वर्गाश्चत्वार ईरिताः ॥१॥

## [ प्रकीर्णवर्गः ]

यानि पूर्वमसंगत्या नैवाख्यात-पदानि ह ।
आख्यातानि प्रचक्ष्यन्ते तानि वर्गेऽत्र कानिचित् ॥२॥
प्रभाति व्युच्छति **व्युष्टे** प्रत्यूषति विभाति च ।
अवदायति **शुक्लत्वे** श्वेतते च क्रियायुगम् ॥३॥
रज्यति त्रीणि रजति लोहितायति चात्मने ।
शोणतीति च **रक्तत्वे**[1], **हरित्वे** हरितायति ॥४॥
नीलायते[2] 'नीलति च तथा' श्यामायते पदम् ।
**वृष्टिरोधे**ऽवगृह्णाति तथावस्कन्दति द्वयम् ॥५॥
**सूर्य्येन्दु-ग्रहणे** तूपप्लवते चोपरज्यति ।
उत्कोचयति **तूत्कोचे** दरिद्राति तु **दुर्गतौ** ॥६॥
**व्यभिचारे** व्यभिचरत्यन्यथाभवतीत्यपि ।
**दूरीकृतौ** दवयति विप्रकर्षयतीत्यपि ॥७॥
द्राघयत्यायमयति स्या**द्दीर्घीकरणे** द्वयम् ।
**उद्वासे** तूद्वसत्यत्र तथोच्छन्नीभवत्यपि ॥८॥
उत्सीदत्युज्जटति च **शेषे** तु परिशिष्यते ।
अत्रावशिष्यत इति द्वितयं कर्मकर्त्तरि ॥९॥

---

१ रक्तिम्नि (ख) ।   २ च नीलाति तथा (ख) ।

**संघाते** पिण्डयत्यत्र स्त्यायत्यपि समूहति ।
कण्डूयति तु **कण्डूतौ, घृष्टौ** कषति घर्षति ।
उपसंहरतीति स्यात्तथा निगमयत्यपि ॥१०॥

**इति प्रकीर्ण-वर्गः ।**

---

## [ सनादिवर्गः ]

धातोस्तुमर्थादिच्छायां सनि रूपं बुभूषति ।
ईचिक्षिषत❀ इत्यादि पूर्ववच्चात्मनेपदम् ॥१॥
नाम्नोमान्ताव्ययान्यस्मात् यिनि-काम्ये च कर्मणः ।
आत्मनस्तु तदिच्छायामर्थे स्यातामुभे **क्रिये** ॥२॥
पुत्रकाम्यति पुत्रीयतृचक्काम्यतृचच्यतीति दिक् ।
एवं कर्मण आचार आधार उपमार्थकात् ॥३॥
यथा पुत्त्रीयति च्छात्रं मञ्चे सौधीयतीति दिक् ।
उपमानात्तथा कर्त्तुराचारार्थे क्रियाद्वयम् ॥४॥
आयौलोपेऽस्य च यथा गर्द्धभोऽश्वायतेऽश्वति ।
स ओजोऽप्सरसोर्नित्यं पय-आदेश्च वा स लुक् ॥५॥
कन्याप्सरायते चौजायतेऽहिः कं पयायते ।
पयस्यते तथान्यस्मात् स-लोपो✓ वा दिगूह्यताम् ॥६॥

---

❀ **इक्षितुमिच्छति ।** ✓ **सरायते सरस्यते परिखा ।**

भृशादेश्च भवत्यर्थेऽत्यर्थे रूपं भृशायते ।
सुमनायत इत्यन्यदूह्यं व्यञ्जन-लोपतः ॥७॥
सुमना उन्मना ओजश्चपलः पण्डितः शुचिः ।
मन्द-भद्रोत्सुका नील-शीघ्राद्याश्च भृशादयः ॥८॥
तत्रैव लोहितादेः स्याद्विकल्पेनात्मनेपदम् ।
लोहितायति पूर्वा दिक् सूर्योऽयं लोहियायते ॥९॥
लोहितः श्याम-जिह्मौ च गर्वो दुःखं सुखं कृपा ।
मूर्छा निद्रा च करुणा हर्षाद्या लोहितादयः ॥१०॥
पापार्थ-क्रमणे कष्टादिभ्यः कष्टायते-मुखाः ।
वाष्पोष्म-फेन-धूमात्तूद्वान्तौ वाष्पायते-मुखाः ॥११॥
सुखादेरनुभूत्यर्थे शब्दा दुःखायते-मुखाः ।
सुख-दुःखास्त्र-कृपण-करुणालीक-कृच्छ्रवत् ॥१२॥
प्रतिपाद्यश्च विद्वद्भिः सुखादिकमुदीरितम् ।
शब्दादिभ्यः कृतौ शब्दायते-वैरायते-मुखाः ॥१३॥
शब्दो वैरश्च कलह-मेघ-वेगाभ्र-दुर्दिनम् ।
शीका-सुदिन-नीहारादयः शब्दादयः स्मृताः ॥१४॥
कण्ड्वादेस्तत्र कण्डूयत्यात्मनेऽपि हृणीयते ।
असूयतीत्यादिकश्च पूर्वं किञ्चित् प्रदर्शितम् ॥१५॥
व्यञ्जनादेर्भृशे पोनःपुन्ये चैकस्वरात् क्रियाः ।
बोभूयते-मुखा धातोर्न गृणातेः शुभे रुचेः ॥१६॥
बहुलं लुकि तत्रापि बोभवीत्यादिका मताः ।
गत्यर्थेभ्यश्च कौटिल्ये लपादेर्भाव-गर्हणे ॥१७॥

तेन जङ्गम्यते लोलुप्यत इत्यादिकं भवेत् ।
प्रयोजकस्य व्यापारे धातोरिणि कृते सति ॥१८॥
भावयत्यादि तत्रीह्यमिजन्ताच्चात्मनेपदम् ।
तत्करोति तदाचष्ट इत्यर्थ इनि लिङ्गतः ॥१९॥
वटुं मुण्डयति क्षेमयतीत्याद्याः क्रिया मताः ।
सत्यवेदार्थतस्तत्राप् स्यात् सत्यापयतीति दिक् ॥२०॥
अन्यतोपि व्रत-श्लोक-वीणा-सेनादिना मतः ।
भवन्ति तत्तदर्थेषु व्रतयत्यादयः क्रियाः ॥२१॥

**इति सनादि-वर्गः ।**

---

## [ नानार्थवर्गः ]

अथोच्यन्तेऽत्र नानार्थाः सत्तायां **भवति**-क्रिया ।
आप्तौ जन्मनि च क्वापि प्राकटेचऽप्युद्भवत्यसौ ॥१॥
साहित्ये सम्भवे च स्यात् क्रिया **सम्भवतीत्य**सौ ।
आद्योपलम्भे सामर्थ्ये **प्रभवत्य**थ वैभवे ॥२॥
व्याप्तौ च स्याद् **विभवति** मानसे च* जपत्यदः ।
याच्ञोपतापैश्वर्येषु **नाथत्या**शिषि **नाथते** ॥३॥
स्तवेऽभिवादने चापि **वन्दते**, **ह्लादते** पुनः ।
ह्लादे शैत्ये च, संक्लेश-हिंसयोः **कुन्थती**त्यदः ॥४॥
याच्ञा-हिंसा-गतिष्व**र्दत्य**थ, **क्रन्दति** रोदने ।
आह्वाने, **लङ्घते** तु स्यादुपवासे गतावपि ॥५॥

---

*** च-काराल्लघूच्चारणे ।**

कम्पने **त्वङ्गति** गतौ याच्ञागत्योस्तथाञ्चते ।
तयोश्च* पूजने **चाञ्चत्यथ** मोहे समुच्छ्रये ॥६॥
**मूर्च्छतीत्यथ** कोटिल्ये स्वल्पीभावे च **कुञ्चति** ।
शब्दे **गर्जति** नादे च **हिण्डतेऽनादरे** गतौ ॥७॥
**कटत्यावृति**-गत्योः स्याच्**छटतीत्यवसादने**✓ ।
तथा विसरणे, दान-दययो**र्दयते**-पदम् ॥८॥
**परिप्लवत** इत्येतच्चापले लाघवेऽपि च ।
**पूयते** स्याद्विशरणे दुर्गन्धे, **क्नूयते** त्विह× ॥९॥
उन्दे च, स्फीततायान्तु पालनेऽपि च **तायते** ।
**क्रम्यते क्रमते** स्यातां तायनोत्साह-वृत्तिषु ॥१०॥
गतौ जग्धौ च **चरति**, निष्पत्तौ तु **फलत्यदः** ।
तथा विशरणे चाथ **कलते** शब्द-संख्ययोः ॥११॥
**जयत्यरि**-पराभूतौ स्यादुत्कर्षे त्वकर्मकः ।
**अवत्यष्टादशार्थे** च प्रायः प्रीणन-रक्षयोः ॥१२॥
स्यान्मौण्ड्येज्योपनयन-व्रतादेशेषु **दीक्षते** ।
सन्दीपने जीवने च **धुक्षते, शिक्षते** पुनः ॥१३॥
ज्ञीप्सा-विद्याग्रहणयोर्दीप्तौ स्वादे च **रोचते** ।
**काशते** कफजे शब्दे दीप्तौ चायं प्रयोगतः ॥१४॥
गतौ कम्पे च **चलति** हर्षे तु **मदयत्यदः** ।
ग्लपने चाथ फुत्कारे **क्रोशत्याह्वान-रोदने** ॥१५॥

---

* **याच्ञागत्योः । ✓ शटति दरिद्रः, शटति दधि । × दुर्गन्धे ।**

शिक्षणे क्षपणे चापि क्रिया **विनयतीत्यसौ।**
अवसादे विशरणे **सीदतीत्यथ धावति** ॥१६॥
गति-शुद्धयो-**र्मेधतीति** मेधा-हिंसन-सङ्गमे।
मिथ्याज्ञाने घूर्णने च **भ्रमति भ्राम्यतीत्युभे** ॥१७॥
**ह्वयते** स्पर्धने हूतौ **चायतीक्षण**-पूजयोः।
**वहति** प्रापण-स्यन्द-धृतिष्वथ **धमत्यदः** ॥१८॥
निःस्वनानल-फुत्कृत्योर्**वपत्युप्तौ** च मुण्डने।
प्लवे **तरत्युत्तरणे नक्षतीति** गतौ स्रवे ॥१९॥
गतौ **स्कन्दति** शोषे च स्यन्दे चाथ मरुद्गतौ।
पावित्र्ये **पवते** हिंसा-घर्षयोस्तु **कषत्यदः** ॥२०॥

**इति भ्वादिः।**

---

पीड़नेऽप्युपहन्त्येतदशुचीकरणेऽपि च।
मिश्रणेऽमिश्रणे **यौति, सौति** तु प्रसवैश्ययोः ॥१॥
ज्ञान-विश्वासयोः **प्रत्येत्यध्येत्यधिगमे** स्मृतौ।
**पिपर्त्ति** पूरणे त्राणे, **बिभर्त्ति** भृति-पोषयोः ॥२॥
**दधाति*** चाथ विश्वास-स्पृहयोः **श्रद्धधात्यदः**।
सङ्कल्पे वञ्चने च **स्यादभिसन्धत्त** इत्यदः ॥३॥
**अनुसन्धत्त** इत्येतद् विचार-प्रत्यभिज्ञयोः ॥४॥

**इत्यदादिः।**

---

विजिगीषा-द्युति-क्रीड़ा-गति-स्तुतिषु **दीव्यति।**
संराद्धि-हिंसयो**रध्यत्य**ङ्गीकारे तु संविदि ॥१॥

---

* **भृति-पोषयोः।**

**प्रतिपद्यत** इत्येतद्दर्पे हर्षे च माद्यति ।
क्षीवत्वे चाथ हर्षे च गर्वितत्वे च **हृष्यति** ॥२॥

**इति दिवादिः ।**

---

**जुषते** सेवन-प्रीत्योर्मु**टत्या**क्षेप-मर्दयोः ।
**घुरत्या**र्त्ते च भीमे च शब्देऽपि गति-वासयोः ॥१॥
**क्षियतीति क्षुरत्येतत्** पदं **छेदे** च खण्डने ।
प्रेषणे सृष्टिभेदे च त्यागे **विसृजती**त्यदः ॥२॥
हृष्ट-भक्षार्थ-नीड़ार्थे विहङ्गम-चतुष्पदाम् ।
आलेखनेऽ**पस्किरत्त** आत्मनेपद-सुड्विधी ॥३॥

**इति तुदादिः ।**

---

पीड़ने मन्थने चात्र सन्धाने**ऽभिषुणो**त्यदः ।
गति-**वृद्धयोर्हिनोती**ति **कृणोति** कृति-हिंसयोः ॥१॥

**इति स्वादि-गणः ।**

---

उर्य्युरर्युररीभ्यश्च **करोति कुरुते** पदे ।
विस्ताराङ्गीकरणयोर्विक्रियायान्त्वकर्मकम् ।
पदं **विकुरुते** शब्द-कर्मकार्थे च सम्मतम् ॥१॥

**इति तनादि-गणः ।**

---

**अनक्ति** म्रक्षणे व्यक्तौ, **विनक्ति** चलने भये।
सुरते चोपभोगे च **संभुङ्क्ते** इति कीर्त्तितम् ॥१॥

**इति रुधादि-गणः।**

---

**श्रीणाति** मिश्रणे पाके, **पृणाति** त्राण-पूरणे।
**गृह्णात्येतदुपादाने** ज्ञाने **गृह्णीत** इत्यपि ॥१॥
**अवष्टभ्नाति** तु प्रोक्तमन्तिकालम्बनार्थयोः ॥२॥

**इति क्र्यादि-गणः।**

---

**लक्षयत्यङ्कने** दृष्टौ गत्यां **बाजयतीत्यदः।**
शर-संस्करणे चाथ मारण-ज्ञापनादिषु❋ ॥१॥
**ज्ञपयत्यथ** भूषायां प्रमोदे **मण्डयत्यथ।**
छेदने पूरणे चापि पदं **वर्द्धयतीत्यदः** ॥२॥
भेदे निमन्त्रणाहृत्योरा**मन्त्रयत** इत्यदः।
**निर्यातयति** वैरस्य शुद्धौ न्यासार्पणे तथा ॥३॥
वर्णक्रिया-गुणोक्त्योस्तु **वर्णयत्यत्र** जीवने।
बले **चोर्जयत्यूर्जयते** ह्रीरुषोस्तु **हृणीयते** ॥४॥
**ऋतीयते** घृणायाञ्च पूजा-वृद्धयो**र्महीयते।**
भोजने तन्निवृत्तौ च पदं **व्रतयतीत्यदः** ॥५॥
**वल्गूयति** तु माधुर्ये पूजने च प्रकीर्त्तितम् ॥६॥

**इति चुरादि-गणः।**

**इत्यनेकार्थवर्गः।**

---

❋ **मारण-तोषण-निशानेषु।**

# अकर्मक-धातवः

सकर्मकोऽप्यकर्मा स्याद् विवक्षा चेन्न कर्मणः।
क्वाप्यकर्मापि कर्माढ्यो भावनायां भवेदिह ॥१॥
अतः स्यान्नाति-नैयत्यमकर्मक-सकर्मणोः।
धातवोऽथापि लिख्यन्ते प्रायो ये स्युरकर्मकाः ॥२॥
सत्तायामुदये स्नेहे मोह-स्नान-विशुद्धिषु।
शयनासन-लज्जासु जीवने मरणे क्रुधि ॥३॥
त्वरायां क्रीड़ने नृत्ये रोदन-स्थिति-दीप्तिषु।
भये स्यन्दे च सन्देहे शोष-स्पर्द्धा-क्षयेष्वपि ॥४॥
मदोद्वेग-प्रकम्पेषु व्यथा-जागर-वृद्धिषु।
जरायां स्वदनो१त्पत्त्योर्मूत्रणे हदने तथा ॥५॥
विकाशे मीलने ह्रासे नाश-स्फुर्त्ति-समृद्धिषु।
तोषे दोषे विरागे च विषादोन्माद-सिद्धिषु ॥६॥
२ प्रभातैश्वर्य्य-दम्भेषु शुक्लिमादि गुणेषु च ३।
ध्वनौ क्लैब्ये दरिद्रत्वे ग्लानि-गर्व-श्रमेष्वपि ॥७॥
क्षोभादिषु तथार्थेषु धातवः स्युरकर्मकाः।
आयन्ता लोहिताद्याश्च४ तथा ये नामधातवः ॥८॥

---

१ स्वदते मोदकः। २ प्रभाति रजनी। ३ श्वेतते प्रासादः; नीलति नभः। ४ कृष्णायते गोपी, लोहितायते प्राची।

आत्मनस्तत्तदिच्छायां भवेयुस्तेऽप्यकर्मकाः ।
अर्थैक्येऽप्यर्थभेदेऽपि स्वयमेव द्विधा स्थितिः१ ॥९॥

एकः कश्चिद्भवेद्धातुरुपसर्ग-वशात्तथा ।
यथा२ कुम्भात् क्षरत्यम्भो, मदं क्षरति कुञ्जरः ॥१०॥

३जयतीश्वर उत्कर्षे जयत्यभिभवे रिपुम् ।
४निखिलं वेत्ति गोविन्दः संवित्ते माधवः स्वयम् ॥११॥
वृन्दावने वसत्यस्मिन् हरिरावसति व्रजम् ।

तथाहि—

धात्वर्थं वाधते कश्चित् कश्चित्तमनुवर्त्तते ।
तमेव विशिनष्ट्यन्योऽनर्थकोऽन्यः प्रयुज्यते ॥१२॥

दुहाद्या नी-वहाद्याश्च धातवो ये द्विकर्मकाः ।
ते विस्तर-भयादत्र ग्रन्थे विलिखिता न हि ॥१३॥

अत्रात्मनेपदादेस्तु प्रक्रिया न हि कीर्त्तिता ।
ततस्ततो व्याकरणाद्विज्ञेया सा विचक्षणैः ॥१४॥

मुदा यथार्थ-नाम्नीयं कविसारङ्ग-रङ्गदा ।
सेव्यतां कोविद-गणैः **प्रयुक्ताख्यातमञ्जरी** ॥१५॥

**इति प्रयुक्ताख्यातमञ्जर्यां तृतीयः काण्डः ॥**

**प्रयुक्ताख्यातमञ्जरी समाप्ता* ॥**

---

१ अकर्मता सकर्मता च । २ अर्थैक्ये उदाहरति । ३ अर्थभेदे ।
४ उपसर्गवशादकर्मकत्वं सकर्मकस्य ।

---

* पुस्तिकान्ते चैतद् दृश्यते—संवत १८९३ पौषकृष्णा ९ रवे हस्ताक्षर-विहारीलाल मिश्रके । त्रिनवाष्टैकमब्दश्च नवमी-पौषकृष्णयो विहारीलाल-लिपिः कृत्वा इयं ग्रन्थः समाप्यतः ।

# श्रीहरिदासशास्त्री सम्पादिता
# ग्रन्थावली

| | | |
|---|---|---|
| १ । | वेदान्तदर्शनम् "भागवतभाष्योपेतम्" | ८०.०० |
| २ । | श्रीनृसिंह चतुर्दशी, | २.०० |
| ३ । | श्रीसाधनामृतचन्द्रिका | ४.०० |
| ४ । | श्रीगौरगोविन्दार्चन पद्धति | ३.५० |
| ५ । | श्रीराधाकृष्णार्चन दीपिका | २.०० |
| ६-७-८ । | श्रीगोविन्दलीलामृतम् | १०१.५० |
| ९ । | ऐश्वर्यकादम्बिनी, | ५.०० |
| १० । | संकल्पकल्पद्रुम | ५.०० |
| ११ । | चतुःश्लोकी भाष्यम् | ५.०० |
| १२ । | श्रीकृष्णभजनामृत | |
| १३ । | श्रीप्रेमसम्पुट, | ५.०० |
| १४ । | भगवद्भक्तिसार समुच्चय | ५.०० |
| १५ । | व्रजरीतिचिन्तामणि, | १५.०० |
| १६ । | श्रीगोविन्दवृन्दावनम् | १.५० |
| १७ । | श्रीकृष्णभक्तिरत्नप्रकाश, | १०.०० |
| १८ । | श्रीहरेकृष्णमहामन्त्र | १.०० |
| १९ । | हरिभक्तिसारसंग्रह | १५.०० |
| २० । | धर्मसंग्रह, | ४.०० |
| २१ । | श्रीचैतन्य सूक्तिसुधाकर | ४.०० |
| २२ । | श्रीनामामृतसमुद्र | ०.५० |
| २३ । | सनत्कुमार संहिता, | ५.०० |
| २४ । | श्रुतिस्तुति व्याख्या, | २०.०० |
| २५ । | रासप्रबन्ध, | ५.०० |

२६। दिनचन्द्रिका २.००
२७। श्रीसाधनदीपिका, २०.००
२८। स्वकीयात्वनिरास परकीयात्वप्रतिपादन, ३०.००
२९। श्रीराधारससुधानिधि(मूल,) १.००
३०। ,, (सानुवाद) ५४.००
३१। चैतन्यचन्द्रामृतम् ६.००
३२। श्रीगौराङ्गचन्द्रोदयः, ६.००
३३। श्रीब्रह्मसंहिता २७.००
३४। भक्तिचन्द्रिका, १२.००
३५। प्रमेयरत्नावली एवं नवरत्न १३.००
३६। वेदान्तस्यमन्तक १३.००
३७। तत्त्वसन्दर्भः, २०.००
३८। भगवत्सन्दर्भः ३८.००
३९। परमात्मसन्दर्भः, ५०.००
४०। कृष्णसन्दर्भः ८०.००
४१। भक्तिसन्दर्भः, ८०.००
४२। प्रीतिसन्दर्भः ७०.००
४३। दशश्लोकी भाष्यम् २५.००
४४। श्रीभक्तिरसामृतशेषः, ५५.००
४५। श्रीचैतन्यभागवत १०१.००
४६। श्रीचैतन्यचरितामृतमहाकाव्यम् ७५.००
४७। श्रीचैतन्य मङ्गल ७५.००
४८। श्रीगौराङ्गविरुदावली १८.००
४९। श्रीकृष्णचैतन्यचरितामृतम् ४८.००
५०। सत्सङ्गमः २०.००
५१। नित्यकृत्यप्रकरणम् ३०.००

| | | |
|---|---|---|
| ५२ । | श्रीमद्भागवत-प्रथमश्लोक | २५.०० |
| ५३ । | गायत्री व्याख्याविवृतिः | ५.०० |
| ५४ । | श्रीहरिनामामृत-व्याकरणम् | १०५.०० |
| ५५ । | श्रीकृष्णजन्मतिथिविधिः | ६.५० |
| ५६ । | श्रीहरिभक्तिविलासः(प्रथमो भागः) | १८०.०० |
| ५७ । | श्रीहरिभक्तिविलासः(द्वितीयो भागः) | |
| ५८ । | श्रीहरिभक्तिविलासः (श्लोकसूचीः) | |
| ५९ । | काव्यकौस्तुभः | ३०.०० |
| ६० । | श्रीचैतन्यचरितामृत | १०५.०० |
| ६१ । | अलङ्कार-कौस्तुभ | |
| ६२ । | श्रीगौराङ्ग लीलामृतम् | ५.०० |
| ६३ । | शिक्षाष्टकम् | २.०० |
| ६४ । | संक्षेप श्रीहरिनामामृत व्याकरणम् | २५.०० |
| ६५ । | प्रयुक्ताख्यात-मञ्जरी | २.०० |

---

## बङ्गाक्षर में मुद्रित ग्रन्थ

| | | |
|---|---|---|
| १ । | श्रीबलभद्र-सहस्रनामस्तोत्रम् | २.०० |
| २ । | दुर्लभसार | ३.५० |
| ३ । | साधकोल्लासः | १५.०० |
| ४ । | भक्तिचन्द्रिका | १२.०० |
| ५ । | श्रीराधारससुधानिधि (मूल) | २.०० |
| ६ । | ,, (सानुवाद) | ६.०० |
| ७ । | भगवद्भक्तिसार समुच्चय | ५.०० |
| ८ । | भक्तिसर्वस्व | ५.०० |
| ९ । | मनःशिक्षा | ५.०० |
| १० । | पदावली | १०.०० |
| ११ । | श्रीसाधनामृतचन्द्रिका | ४.५० |

# ❀ आगामी प्रकाशन ❀

१। बृहद्भागवतामृतम्

२। लघु भागवतामृतम्

३। उज्ज्वलनीलमणि

४। वेदान्तदर्शन (सटीक, सानुवाद)
श्रीबलदेवविद्याभूषणकृत भाष्ययुक्त।

५। श्रीगोपालतापनी उपनिषत्

६। श्रीमद्भागवत (सप्त टीका समन्वित)

७। श्रीगौराङ्ग चम्पू

८। श्रीकृष्णभावनामृत

९। सिद्धान्तरत्न (सटीक)

सद्ग्रन्थ प्रकाशक—
श्रीहरिदासशास्त्री
कालीदह, वृन्दावन–२८११२१

